# BIBLIOTHECA INDICA;

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED UNDER THE SUPERINTENDENCE OF THE

ASIATIC SOCIETY OF BENGAL.

Nos. 46, 137 and 138.

---

THE

# SAÑKARA-VIJAYA,

OR THE

## LIFE AND POLEMICS OF SAṄKARA ÁCHÁRYYA,

BY

ÁNANDA GIRI.

EDITED BY

JAYANÁRÁYAṆA TARKAPAÑCHÁNANA,

*Professor of Nyáya in the Sanskrit College of Calcutta.*

---

CALCUTTA:

PRINTED BY C. B. LEWIS, BAPTIST MISSION PRESS.

1868.

# शङ्करविजयः।

## आनन्दगिरिविरचितः।



श्रीनवद्वीपगोस्वामिना

श्रीजयनारायण-तर्कपञ्चाननेन च

परिशोधितः।

३३ प्रकरणपर्य्यन्तं सोमप्रकाशयन्त्रे

अनन्तरं कलिकाताराजधान्यां वाप्तिष्ट-मिषन्-यन्त्रे

मुद्रितः।

शकाब्दाः १७८९। खीष्टाब्दाः १८६८।

## प्रथमं प्रकरणं।

—०%०—

श्रीगणेशाय नमः।

श्रीगुरुभ्यो नमः। ओं आचार्यजयो लिख्यते।

नमामि शङ्कराचार्य्यगुरुपादसरोरुहं।
यस्य प्रसादान्मूढोऽपि सर्वज्ञोऽहं सदाऽभवं॥

अनन्तानन्दगिरिरहमप्रतिहताज्ञस्य भगवतः शिष्यः स्वगुरोरवतारप्रयोजनं वर्णयामि, अन्यच्च मम परमगुरोरवतारकथा-तदुपकृतिपोषितजगत्परम्पराऽविच्छिन्नशुद्धाद्वैतविद्याप्रतिष्ठा-तदाशाविजयकौतूहल-तद्व्यासदर्शनविचित्र-तच्छरीरावसानकालागतब्रह्मदेववचन-व्यासदत्तायुःप्रपञ्च-भट्टदर्शन-मण्डनमिश्रजय-तदङ्गनाप्रश्न-देहान्तरसञ्चारविदितकामशास्त्र-शिष्यागमन-नृसिंहसाक्षात्कार-सरस्वतीजय-शृङ्गगिरिस्थानवास-काञ्चीनगरनिर्म्माण-शाक्तादिप्रपञ्च-श्रीचक्रनिर्म्माण-मोक्षमार्गप्रकाश-सच्चिदानन्दैक्यनामानि प्रकरणानि, तत्तदवान्तरकथाविस्तारविजृम्भितं नानाप्रश्नोत्तरभासुरं बहुदुष्टमतनिबर्हणनिपुणं करोमि ॥ ॥ इत्यनन्तानन्दगिरिकृतौ आचार्य्यविजये आख्योपक्रमणं प्रकरणं प्रथमं॥

अथ(१)भगवांश्चतुर्मुखः स्वमुखबाहूरुपादेभ्यः किल ब्राह्मणक्षत्रवैश्यशूद्रान् निर्माय संस्थानचक्राधिदेवशिवविष्णुब्रह्मगणपत्युपासकान कृत्वा जातिधर्मपरिपालनतपोविधिमाकल्पपर्य्यन्तमाचकार। ततः प्रवृत्तेषु कृतादियुगेषु ब्राह्मणादयः सत्यधर्मतपोविद्यादिपरिशोभितशीलाः सर्व्वदेवमयः स्वजातिदेव इति सम्यग्विचारसम्पन्नाः स्वैशैक्यनिर्ज्जितभिदाद्यन्तरायाः सदाद्यर्थपर्य्यालोचनतत्परा बभूवुः।

पूज्येषु सेवका नीचाः पुण्यमार्गक्रियानुगाः।
तत्तदेव पदं चापुर्यथाजातिकुलस्थिति॥
विप्राणां दैवतं शम्भुः क्षत्रियाणां तु माधवः।
वैश्यानां तु भवेद्ब्रह्मा शूद्राणां गणनायकः। इति
मनुस्मृतेः॥

ब्राह्मणेन शिवः शिवतत्त्वविदा सेवितव्यः क्षत्रियादिना तु तत्तत्त्वविदेति निरवद्यं मनुस्मृतेरितरथाकर्त्तुमशक्यत्वात्। परन्तु क्षीणे पुण्ये लुप्तधर्मतया क्लेशभाजि कलियुगे परस्पररागादिग्रस्तेषु (२) ब्राह्मणादिषु सत्यज्ञानशून्येषु निगमाचारपरित्यक्तेषु लोकप्रवृत्तिः काचिदासीत्। (३)

---

(१) सर्गादौ। तै. पु.। का. पु.।

(२) लुप्तधर्म्मे तपोक्लेशभाजि कलियुगे परस्पररोगादिग्रस्तेषु। का. पु.। तैलङ्ग पुस्तके तु। परस्पररागादिग्रस्तेष्विति पाठान्तरं।

(३) कदाचिदेवमासीत्। का. पु.। तै. पु.। स. पु.।

केचिच्छम्भुरताः परे हरिरता वाणीरताः केचन
केचिदग्निरता दिवाकररता विघ्नेशभक्ताः परे।
केचिच्छक्तिरताश्च भैरवरताः केचित्तु मल्लारिगा
विश्वक्सेनरताः परे मदनगाः केचिद्भजन्त्यर्थदं॥
केचित्सुरेशमपरे यममप्पतिञ्च
वायुं महीमुदकमम्बरमादिमूर्त्तिं।
केचिद्विराजमपरे त्रिगुणान् यथेष्टं
केचित् प्रधानमपरेऽणु (१) मुपात्तकर्म्म॥
केचिच्चन्द्रपराः परे कुजपराः केचित्तु सौम्योत्सुकाः
केचिज्जीवपराः परे भृगुपराः केचित्तु मन्दाश्रिताः।
केचित्कालपराः परे पितृपराः केचित्तु नागेशगाः
केचित्तार्च्चपराश्च सिद्धनिचयं (२) सेवन्ति केचिद्भिया॥
केचिद्गन्धर्व्वसाध्यादीन् भूतवेतालगाः परे।
एवं नानाप्रभेदानां (३) नृणां वृत्तिर्यथेप्सिता॥
केचित् स्ववृत्तिं वेदार्थैः प्रतिपाद्यां समूचिरे।
(४) केचिद्धर्म्मैरियंमुक्तिरितिजल्पं समाश्रिताः॥
अन्योन्यमत्सरग्रस्ताः परस्परजयैषिणः।

---

[१] केचित्प्रधानमणुवाद। स. पु.। तै. पु.।का. पु.।

(२) केचित्तार्च्चपराः स्वनिश्चयपराः। का. पु.। का. पु.। वाञ्छ-निचयं। स. पु.।

(३) प्रभेदः स्यात्। का. पु.। तै. पु.।

[४] केचित्परैरियंमुक्तिरितिजल्पंसमाश्रिताः।का॰ पु॰। तै. पु.।

निजेच्छाकल्पितमार्गेषु चारयन्ति रुषान्विताः ।

तत्र लिङ्गत्रिशूलडमरुमुद्रादिचिह्नं, शङ्खचक्रगदापद्मादिचिह्नं, कमण्डलुकूर्चिकादिचिह्नं, विस्फुलिङ्गादिचिह्नं, पूर्णमण्डलरक्तचन्दनादिचिह्नं, एकदन्तचिह्नं, स्वर्णचर्मपादहरिद्रादिचिह्नं, स्फटिकारुद्रचक्रजटाविभूत्यादिचिह्नं, वराटमालिकाश्ववेषभाषादिचिह्नं, स्वर्णादिरचितशङ्खचतुर्बाहुत्वादिदण्डतोयपाणित्वादिचिह्नं, पुष्पकोदण्डाद्युपकल्पितवसन्तोत्सवभूषणचिह्नं, नवनिधानरूपकण्ठमालिकादिचिह्नं, मणिरचितवज्रायुधधारणादिचिह्नं, महिषरूपवेषप्रतिमादिचिह्नं, सलिलमध्यस्थलपूजादिचिह्नं, वायुपुरुषस्तवोपासनचिह्नं, भूमिदेवतोपासनचिह्नं, तीर्थयात्रायुदकधारणादिचिह्नं, शून्योपासनचिह्नं, आदिवराहोपासनचिह्नं, चतुर्दशलोकपालोपासनचिह्नं, सत्त्वरजस्तमोगुणोपासनवेषधारणादिचिह्नं, शास्त्रनिर्दिष्टप्रधानोपासनचिह्नं, तर्कराद्धान्तनिश्चितपीलूपासनचिह्नं, जैमिनिमतसिद्धकर्मप्रपञ्चसञ्चारचिह्नं, पूर्णिमादिकालवेषचन्द्रोपासनादिचिह्नं, अङ्गारकादिपञ्चग्रहोपासनचिह्नं, क्षपणकमतसिद्धकालोपासनादिचिह्नं, दर्शादिपुण्यकालासादितपवित्रपितृपासनादिचिह्नं, स्वर्णादिरचितशेषफणधारणादिचिह्नं, वैनतेयमूर्त्युपासनचिह्नं, नित्यनाथादिसिद्धवेषभाषाधारणादिचिह्नं, गानविशेषे विश्वावसूपासनादिचिह्नं, चिताभस्मोद्धूलनशल्यविशेषधारणादिभिर्भूतराडुपासनादिचिह्नं, अश्वादिबन्धुकज्जलादिधारणवेतालोपासनचिह्नमित्यादिबहुविधं यथेच्छं सम्प्राप्य

स्वेच्छाविहरणशीला मर्त्या बभूवुः, तानहरहःसन्ध्यामुपासीते-त्यादि बहुविधविधिवचनानि पीडयन्ति।

कर्मभ्रष्टान्सनन्ददूरात् (१) मूढान्नराधमान्।
तान् दृष्ट्वा नारदः क्षोभमाप ब्रह्मपदान्तिकम्॥
भो तात नूतनमभूज्जगदेतदर्वा-
ग्वाक्त्रयुक्तिपरिकल्पितकर्मशीलं।
कालादिजातनिगमार्थपरम्परा स्या-
द्व्यर्था तदा यदि भवन्मतमप्रमाणम्॥

भवद्भिः पूर्वमिदमुक्तं। सदेव सोम्येदमग्र आसीत्। ब्रह्म वा इदमग्र आसीत्। आत्मा वा इदमेक एवाग्र आसीत्। वासुदेवो वा इदमग्र आसीत्।

यदाऽतमस्तन्न दिवा न रात्रि-
र्न सन्न चासच्छिव एव केवलः।
तदक्षरं तत्सवितुर्वरेण्यं
प्रज्ञा च तस्मात्प्रसृता पुराणी॥ स्मृतिश्च,
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते।
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः इति॥
तत्प्रीतये कर्म करोतु विप्रः क्षत्रस्तु भूमिं महसा (२) भुनक्तु।
वैश्योददात्वर्थमथास्य(३)तुष्ट्यै शूद्रः करोत्वग्रजपूजनं हि॥ इति॥

---

[१] दूरां चैतान्। स. पु.। तै. पु.।

(२) सहसा। स. पु.। तै. पु.। का. पु.।

(३) ददात्वर्थमथापि। बां. पु.।

तस्माद् द्विजातीनामेकमेव दैवतं सदाशिवशब्दवाच्यं तस्य गुणातीतत्वेर्लिङ्गाभावात् तत्सत्त्वे मानाभावाच्च निरुपाधिकं ब्रह्मैव मुमुक्षुभिरुपासनीयमिति। एवं नारदवचनं निशम्य ब्रह्मापि चिरं ध्यात्वा स्वलोकात् पुत्रमित्रभक्तादियुक्तः शिवलोकं प्राविशत् तत्र मध्याह्नकोटिसूर्य्यकोटितेजसं कोटिहिमांशुशीतलं पञ्चवक्त्रं चन्द्रमौलिं विद्युत्पिङ्गजटाधरम् पार्व्वतीवामार्द्धशरीरिणं सर्व्वेश्वरं महादेवं दृष्ट्वा दण्डवत्सगणः प्रणनाम, उत्थाय सम्पुटितहस्तयुगः सगणो ब्रह्मा किलोवाच। भो महादेव सर्व्वज्ञ सर्व्वलोकेश सर्व्वसाक्षिन् सर्व्वमय सर्व्वकारण सर्व्वात्मक सर्व्वातीत सर्व्वदेववन्दितचरणारविन्द प्रणवरूप प्रणवातीत प्रणवगोचर कालरूप कालातीत कमनीयविग्रह कन्दर्पहर कामितार्थप्रद करुणाकर श्रीपरमेश्वर सावधानेन मदीयां विज्ञापनामवधारय, तुरीयप्रणवातीताद् ब्रह्मणः सच्चिदानन्दलक्षणाद्भवतः किलार्द्धविन्दुरूपा प्रकृतिरुत्पन्ना, तवैतस्याश्चन्द्रचन्द्रिकान्यायेन शुद्धाद्वैता सा त्वमेवेति सिद्धं। तत्सकाशादकारः शुक्लः सत्त्वसम्पन्नः, तस्मादुकारः कृष्णः तामसगुणप्रधान उत्पन्नः, तस्मान्मकारः शोणवर्णः रजःसम्पन्नोऽहं भवदाज्ञया (१) जरायुजादिचतुर्विधजङ्गमान् पर्व्वतादीन् स्थावरांश्च सृष्ट्वा समुद्रद्वीपगिरिनदीवनपुरग्रामगोतुरगमर्त्त्यकरिसिंहव्याघ्रभल्लुकादीन् ब्रह्मक्षत्रियवैश्य-

(१) तत्सकाशान्मकारः शुक्लस्तामसगुणप्रधान उत्पन्नस्तस्मादकारः कृष्णः सत्वसम्पन्नस्तस्मादकारः शोणवर्णः रजःसम्पन्नोऽहं भवदाज्ञया। का. पु.। स. पु.। वा. पु.। तै. पु.।

शूद्रजातीन् प्राणिनश्च तत्तद्धर्मसमाचारशीलान् कृत्वा भवच्चरणारविन्दध्यानासक्ते मयि सत्यलोकाश्रिते भूलोके कश्चिदुपद्रवः समुत्थितोऽभवत्। तदवधारय।

श्रुत्याचारं परित्यज्य मिथ्याचारं समाश्रिताः।
विप्राद्यो विचित्रैस्तु लिङ्गैः सन्तप्तदेहिनः॥
हुतं नैव यथाकालमग्नौ हव्यमतन्द्रितः। (१)
लिङ्गिनो वयमित्युच्चैरभिमानान्नराधमाः॥
न दत्तं पर्व्वणि प्राप्ते कव्यं पित्रादितृप्तये।
नाध्यापितं ब्रह्मयज्ञं सत्यलोकस्य सिद्धये॥
नाग्निष्टोमो नायनं न सन्न्यासं कदाचन।
करोति मनुजः कश्चित्सर्व्वे पाषण्डमाप्नुयुः॥
विष्णुदासा वयं चेति वयमीशानलिङ्गिनः।
[illegible] भक्ताश्च केचन॥
केचित्कापालिकाचारा मद्यमांसाशिनः सदा।
एकस्यैवमतस्यापि (२) भेदषट्कं समाश्रिताः॥

एवं बहवश्चार्वाकमतसिद्धान्ताश्रिताः तत्स्वरूपमेव परमिति तदाचाराः(३)। सत्यशौचादिधर्मकर्मज्ञानरहिताः पशव इव द्वैतवादिनः श्रुतिस्मृतीतिहासपुराणोपपुराणादिफलितकर्मज्ञानरूपमार्गद्वयं परित्यज्य तृतीयपथा मूढतात्पर्य्येण हि विहिताविहि-

---

[१] हव्यं समन्ततः। वा. पु.। स. पु.। का. पु.।
[२] एकस्यैकतमस्यापि। का. पु.। तै. पु.।
[३] तदाद्र्ताचाराः। स. पु.। का. पु.।

तमविज्ञाय शुद्धाद्वैतविरोधिनः दुर्नीत्या श्रुत्यर्थविरुद्धं तात्पर्य्यं स्वीकृत्य सर्व्वे कुमतशीला बभूवुः।

कर्त्ता त्वमीश जगतां मम केशवस्य
तेजोभुगन्तसमये लयकर्त्तृकत्वात्-।
(१) तस्मात्कुविप्रवलकुत्सितदुर्म्मतानां
नाशाय चिन्तय समुद्धर वेदमार्गं॥

इति ब्रह्मणा प्रस्तुतः श्रीपरमेश्वरः सन्तुष्टान्तरः सन्निदमुवाच।

ब्रह्मन् यथासुखं गच्छ सन्तुष्टोऽस्मि तवोक्तितः।
शङ्कराचार्य्यनाम्नाहं सम्भवामि महीतले॥
यद्धितं तव विष्णोश्च तदेव स्थापयाम्यहं।
मम भक्तावुभौ यस्मात्सत्यं नान्यद्विचिन्तय॥
मद्विभूतिर्हरिस्त्वं हि चेन्द्राद्यष्टदिगीश्वराः।
वसवो द्वादशादित्या गन्धर्व्वाश्च मरुद्गणाः॥
यक्षाः सिद्धास्तथा साध्या गरुड़ाः किन्नरादयः।
किमत्र बहुनोक्तेन सर्व्वं चेदं चराचरं॥
मदङ्गभेदसञ्जातं लये मय्येव लीयते।
अहमेकोऽक्षरः कर्त्ता ध्रुवः शाश्वत एव च॥
आत्मा गुहाशयः सर्व्ववेदार्थप्रणवात्परः।
तस्मात्सर्व्वेषु कालेषु मामद्वैतमुपाश्रय॥
इति सम्बोधितो ब्रह्मा प्रणिपत्य महेश्वरं।

---

१ तस्मात् कुविद्यवल। वा प। तस्मात्त विप्रवलकुत्सितदुर्म्मतीनाविति। स. पु.। सै. पु.।

सगणः प्राप सत्याख्यं निजलोकमनन्यधीः ॥
ततः सर्वात्मको देवश्चिदम्बरपुराश्रितः ।
आकाशलिङ्गनाम्ना तु विख्यातोऽभून्महीतले ॥
तत्र विद्वन्महेन्द्रस्य कुले द्विजगणाश्रिते ।
जातः सर्वज्ञनाम्ना तु कश्चिद्द्विजकुलेश्वरः ॥
कामाक्षीति सती चाभूत्तस्य लक्षणलक्षिता ।
चिदम्बरेश्वरं ध्यात्वा तावुभौ प्रापतुः सुतां ॥
सा कुमारी सदा ध्यानसक्ताऽभूज्ज्ञानतत्परा ।
विशिष्टेति च नाम्ना तु प्रसिद्धाऽभून्महीतले ॥
तामष्टमेऽब्दे विप्राय शान्तायाद्भुतकर्मणे ।
प्रददौ विश्वजिन्नाम्ने सर्वज्ञोऽस्याः पिता स्वयं ॥
सा सदा पतिमद्वैतं ध्यात्वाकाशात्मकं शिवं ।
तस्या-(१)-राधनमत्युग्रमाचकार विवेकिनी ॥
तादृशीमपि सन्त्यज्य ययौ विश्वजिदद्भुतं ।
अरण्यं (२) तपसे कृत्वा मनो निश्चयतां गतं ॥
तदा प्रभृति सा नारी चिदम्बरमहेश्वरं ।
तोषयामास (३) पूजाभिर्ध्यानैरात्मगतैः सदा ॥
स देवः (४) सर्वपूर्णोऽपि तस्या वदनपङ्कजं ।

[१] अस्या- । वा. पु. ।
(२) अरण्ये । वा. पु. ।
(३) पूजयामास । स. पु. । वा. पु. ।
(४) सदैव । वा. पु. ।

प्रविश्य विस्मितान् कुर्वन् जनानन्यान् समागतान् ॥(१)
महोग्रतेजसा जुष्टा विशिष्टाऽभूद्यथाम्बिका। (२)
सर्वैः सम्पूजिता नित्यं पित्रादिभिरुपाश्रिता ॥ (३)
अतीते मासि, गर्भस्य वृद्धिरासीद्दिने दिने।
चिदम्बरेश्वरं कृत्वा यजमानं द्विजोत्तमाः ॥
तृतीयादिषु मासेषु चक्रुः कर्माणि वेदतः।
प्राप्ते तु दशमे मासि विशिष्टागर्भगोऽमनः ॥ (४)
प्रादुरासीन्महादेवः शङ्कराचार्य्यनामतः।
आसीत्तदा पुष्पवृष्टिर्देवसङ्घैः प्रचोदिता।
नेदुर्दुन्दुभयो दिव्याः स्वर्गलोके चिरं सुखम् ॥

इत्यनन्तानन्दगिरिकृतौ आचार्य्यविजये श्रीमच्छङ्कर-भगवत्पादाचार्य्याख्य-श्रीमदद्वैतसिद्धान्त- श्रीपरमगुरोरवतार-कथा प्रकरणं द्वितीयम् ॥ * ॥

---

(१) समागतान्। वै. पु.।

(२) दृढाम्बिका। वा. पु.। स. पु.।

(३) उपासिता। स. पु.। का. पु.

(४) विशिष्टागर्भगोलकात्। वा. पु.। स. पु.।

## तृतीयं प्रकरणं ।

विविधकल्पतेजोगुणगाम्भीर्य्यादियुक्तः शैशवेऽपि प्राकृतमागधगीर्वाणादिसर्वभाषाकुशलः सरस्वतीविलास इव समवर्त्तत । तृतीये वर्षे चौलकर्म पञ्चमे वर्षे मौञ्जीबन्धं विधुक्तितसुकृः (१) विप्रौघाः । तदनु विद्यागुरुसमीपे सकृच्छ्रवणादेवावगतसर्वविद्याप्रपञ्चातीत इव समज्ञानवशात् (२) जीवन्मुक्त इव किलानाल्यादभवद्भगवान् श्रीमदाचार्य्यः । षड्दर्शनमूल इतिहासस्थाणुः निगमशाखः षड्ङ्गपल्लवः सूत्रपुष्पः मन्त्रशलाटुः * ज्ञानपक्कफलः श्रीशङ्करकल्पवृक्ष आसीत् ।

स्वर्गे यथा कल्पतरुस्तथा भूमौ हि शङ्करः ।
सुराणां भूसुराणां च वाञ्छितार्थप्रदो गुरुः ॥
वेदे ब्रह्मसमस्तदङ्गनिचये गार्ग्योपमस्तत्कथा-
तात्पर्य्यार्थविवेचने गुरुसमस्तत्कर्मसम्वर्णने । ( ३ )
आसीज्जैमिनिरेव तद्वचनदर्पोद्बाधकन्दे ( ४ ) समो
व्यासेनैव मदीयसद्गुरुरसौ श्रीशङ्कराख्यः क्षितौ ॥

---

(१) विधितसुकृरिति । का. पु. । स. पु. । तै. पु. विधुक्तितः कुर्व्वन्तीति । वा. पु. ।

(२) सम्यक्ज्ञानवशात् । का. पु. । तै. पु. ।

(३) संवरणे । तै. पु. ।

(४) तद्वचनदर्पोद्बोधकन्दे । स. पु. । तै पु. ।

---

* शलाटुः अपक्वफलं ।

अद्वैतार्णवपूर्णचन्द्रमभिधापद्माटवीभास्करम्
विद्वत्कोटिसमर्चिताङ्घ्रियुगलं प्रद्योतकज्ञानकं।
ह्याविद्यसमस्तवेदजनितप्रोद्यद्विवेकाङ्कुरं
स्विद्यदागमतं परात्परगुरुं (१) श्रीशङ्करं तं भजे॥

अर्द्धेन्दुललाटः पूर्णेन्दुमुखः विशालवक्षा आजानुबाहुर्निम्नः पीनोरुर्गूढगुल्फः(२) स्वल्पपादः शोणनखः करपादमध्यस्थलेषु शङ्खचक्रादिचिह्नितः शिरसि वामभागे त्रिशूलचिह्नं दक्षिणभागे त्वर्द्धचन्द्रचिह्नमेवमङ्कद्वयेन (३) साक्षाच्चिदम्बरेश्वर इव विराजमानः समप्रमाणशरीरः मौञ्जिदण्डाजिनतिलकधारणभिक्षाशनादिभिः (४) शास्त्रविधिरेवमनुष्ठेयमिति सर्व्वमर्त्यान् बोधयन् शिष्यबोधनार्थमुपाध्यायानुज्ञावशाद् ब्रह्मासने चतुःषष्टिकलापरागके चतुर्द्दशविद्यामणिविराजिते सहस्रवेदप्रभादीपिते सूत्रेतिहासतन्तुविराजिते तापनीयागममन्त्रयन्त्रतन्त्रादिपट्टचित्रदकुलोच्छ्रिते प्रागद्रौ बालभानुरिव, ब्रह्माण्डगोलकोले ध्रुव इव,जनकक्रतद्वादशवार्षिके सत्रे याज्ञवल्क्य इव,परीक्षिन्नरेन्द्रस्य ज्ञानबोधसमये शुकइव,मेरुमस्तके तपश्चर्य्यां कारोचितव्यास इव, रामकथाप्रदानकाले वाल्मीकिरिव, भाष्यो-

(१) परापरगुरुं। वा. पु.।
(२) पीनोरुगुल्फ इतिपाठस्तु तैलङ्गपुस्तके।
(३) एवमंशकद्वयेन। का. पु.। वा. पु.।
(४) तिलकभिक्षाशनादिभिरिति। का. पु.। स. पु. वा. पु.। त्रिपुण्ड्रधारणभिक्षाशनादिभिरिति। तै. पु.।

पदेशकाले कृष्ण इव, (१) देवानां शिक्षासमये सुराचार्य्य इव, नारदोपदेशकाले ब्रह्मेव, धर्मराजस्य तत्त्वोपदेशकाले श्रीकृष्ण इव, (२) समासीनः श्रीशङ्कराचार्य्यगुरुरनेकशिष्याणां निगमादिसर्वशास्त्रप्रपञ्चस्य सदुपदेशमाचकार। भोः शिष्य त्वमेव ब्रह्म कस्माच्चैतन्यैकरूपत्वात् तर्हि अविद्यापरिकल्पितेषु देहेन्द्रियादिषु विद्यमानेष्वपि चेतनस्त्वमेव भवसि। कथं गुरो सुखदुःखभाजो मे चेतनता, जन्मान्तरकर्म्मवशाज्जनिं प्राप्तस्य जलबुद्बुदवदशाश्वतदेहस्य इन्द्रियादिभिरुपेतस्य जन्मस्थितिमरणप्रवाहलीनस्यारिषड्वर्गपीड़ितस्य दारादीषणात्रयग्रहग्रस्तस्य नहि नित्यानन्दरूपत्वं कल्पयितुमुचितं मदन्तर्वर्त्तिनो जीवस्येति चेन्न तस्यापि किञ्चिज्ज्ञत्वादिधर्माश्रयत्वादिच्छामोहादिपीड़ितत्वाच्च। किञ्च भेदवादिनस्तावदत्त्रो जीवः शुभाशुभभोक्ता मायागोलगूढ़ः परमेश्वराद्भिन्नरूपः तस्य परिपक्वज्ञानेनापि सायुज्यभाव एव, किन्तु सुकृतकर्मणा पुण्यलोकप्राप्तिः कपूयादि *कर्मणा नरकलोकप्राप्तिरेवमाह शास्त्रं (महती श्रुतिः छान्दोग्यपञ्चमोध्याये दशमखण्डे) अथ यदि ते रमणीयचरणा रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं क्षत्रिययोनिं वा वैश्ययोनिं वेति। अथ यदि ते कपूयचरणाः कपूयां योनिमापद्येरन् श्वयोनिं वा शूकरयोनिं वा चाण्डालयोनिं वेति (३) त-

(१) प्रतञ्जलिरिव। का. पु.। तै. पु.।

(२ भोजसदसि कालिदासइवेत्यधिकः पाठस्तु का. पु.। वा. पु.।

(३) रोयरसाहेबमुद्रितग्रन्थे त्वेतच्छ्रुतेः पाठान्तरं क्वां, ऊं, प्रभ

* कपूयं धर्म्मसम्बन्धवर्ज्जितं जुगुप्सितं कर्म्म इतिभाष्यं।

स्यात् सृष्टौ प्रलयेऽपि भिन्न एव जीवः प्रतिशरीरं विचित्रकर्माणि करोति, मोक्षो नाम सुखरूपस्थानप्राप्तिमात्रमेव प्रोच्यत इति वदन्ति, तादृशे मयि सत्यज्ञानानन्दलक्षणलक्षितशुद्धचैतन्यकल्पना कथमुचिता स्यादित्यालापिनं शिष्यं प्रत्याह भगवान् श्रीमदाचार्य्यः यः सर्व्वज्ञः सर्व्वविद् यस्य ज्ञानमयं तप इत्यादिशास्त्रप्रसिद्धः परमात्मा जगदुपादानकारणं, स ईक्षत लोकान् नु सृजा इति स इमाँल्लोकानसृजत । अम्भो मरीचिर्मरमापोऽदोऽम्भ इति लोकसृष्टिं विधाय अतलादिसत्यान्तचतुर्द्दशलोकरूप विराड्देहे अग्न्यादिदेवान् सम्पाद्य मुखादिच्छिद्रेषु यथायतनं प्रविशतेत्युक्त्वा किञ्चिदालोचितवानभूत्, एवम्भूतस्य साङ्गस्य सेन्द्रियस्य विराड्देहस्य नहि तृप्तिकरमन्नं सम्पादयितुं शक्यं तद्व्यतिरिक्तवस्त्वभावात् । तस्मादन्यदल्पशरीरं स्रष्टव्यमिति विचार्य्य गोदेहं सेन्द्रियाधिदेवक्षुत्पिपासादिसंयुतं सृष्टवान्, ततस्त्वग्न्यादिदेवताः परमात्मानमब्रुवन् तावदयं गोदेहः यद्दन्तः (१) पशुभावमापन्नः वायहितस्य न वै नोयमलमिति अतस्त्वीश्वरः स्वतन्त्रकरुणया दूर्व्वाङ्कुरमूलोत्पाटनहेतुभूतमुभयतोदन्तमश्वदेहं सृष्ट्वा अग्न्यादिदेवान् यथायतनं प्रविशतेत्याह, ते तत्र गता अपि सुखलेशमलब्ध्वा पुनर्न वै नोऽयमलमि-

---

छ़ ५. ७ । तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वाथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा शूकरयोनिं वा चाण्डालयोनिम्बेति भाष्यसम्मतं ।

(१) एकदन्तइति । वै. पु. ।

त्यमु बन्, भगवान् पुनरपि विचार्य्य निर्निमेषकस्तथा विवेकवा-क्यसम्पन्नं पुरुषदेहं दृष्ट्वा अग्न्यादिदेवान् यथायतनं प्रविशतेत्याह। ते तत्र गताः सुकृतं वतेति पुरुषो वाव सुकृतमिति सुखमापुः पुनरेवं विचारमाचकार, मनःप्रवृत्त्यनुकूला किलेन्द्रियप्रवृत्तिः तस्य प्रेरकाभावे कार्य्यासामर्थ्यं स्यात् समनस्केन्द्रियगणस्य जड़त्वात् जड़प्रेरकेण त्वजड़ेनैव भवितव्यं अजड़स्य चैतन्यत्वात् तदन्यस्य जड़त्वाच्च, तस्मादाह परमेश्वरः कथं न्विदं मद्दते स्यादिति। यदिदं देहेन्द्रियतदभिमानिदेवतावच्छरीरजातमस्ति तदिदं सर्वं मद्दते भोगस्वामिनं जीवरूपधारिणं विना कथं नु नाम स्यात् तस्माद्भोगस्वामिना मया जीवरूपधारिणा देहः प्रवेष्टव्य इत्यर्थः। ततः परमात्मा स ईक्षत कतरेण प्रपद्या इति तावद्द्वारप्रवेशमार्गौ द्वौ पादाग्रं मूर्द्धि ब्रह्मरन्ध्रञ्च तयोर्मध्ये कतरेण केन मार्गेण प्रपद्ये प्रविशामीत्यर्थः ननु कथं न्विदमिति वाक्येन आत्मनो जीवरूपेण प्रवेशस्य देहेन्द्रियादिव्यापारपालनमेव (१) प्रयोजनं नान्यदिति चेन्न आत्मबोधस्वरूपस्य,प्रयोजनान्तरस्य विद्यमानत्वात्, प्रविष्टस्य देहेन्द्रियादिप्रेरकस्य देहेन्द्रियातीतस्य प्रवेशमात्रेणैव मायानुग्रहवशाज्जीवभावमापन्नस्य सत्यज्ञानानन्तलक्षणलक्षितस्य परमात्मनः सम्यग्ज्ञानादभेदाध्यवसायेन परमात्मनि (२) मनोलये जाते एकमेवाद्वितीयम् ब्रह्म नेह नानाऽस्ति किञ्चनेत्यभेद-

(१) व्यवहारपालनमेव। का. पु.। तै. पु.।

[२] सम्यग्ज्ञानादभेदाध्यवसायमनःसिद्धिप्रवृत्तिनिवृत्तिपरमात्मनि। का. पु.। तै. पु.। वा. पु.।

सिद्धिर्भवतीति सोऽहमिति सर्वात्मज्ञानवानिहामुत्रव्यापकः परि-पूर्णो भवतीति शास्त्रात् तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनायेति च ब्रह्मविदाप्नोति परमित्यादि च। तदनु स परमेश्वरः एतमेव सीमानं विदार्य्यैतया द्वारा प्रापद्य-त, एतमेव मूर्ध्नि मध्यभागमेव कपालसन्धिरूपं स्थानं विदा-र्य्य छिद्रं कृत्वा तत्तन्मार्गेण क्रियाज्ञानशक्तियुक्तः (१) सन् दे-हमध्यं प्राविशत् यस्माज्ज्ञानोपाधिकस्य मूर्ध्नि मध्ये प्रवेशः तस्मा-न्मूर्ध्नि ज्ञानेन्द्रियबाहुल्यं सम्भाव्यते क्रियाशक्त्युपाधिकस्य पादाग्रे प्रवेशात् कण्ठादधोभागे कर्मेन्द्रियबाहुल्यं प्राप्यते एतद्विषयप्रप-ञ्चस्तु बहुधा मदीयेषु ग्रन्थेषु दर्शितः * इत्युक्तः शिष्यः श्रीम-द्गुरुपादाम्बुजं नत्वा स्वस्वरूपं विदित्वा सुखमास। एवमनेक शिष्याः श्रीगुरूपदेशमहिम्ना सर्वविद्यासम्पन्ना बभूवुः।

शतैः सहस्रैः सच्छिष्यैर्लक्षैः कोटिभिरेव च।
व्याप्तमासीज्जगदिदं शुद्धाद्वैतपरायणैः॥
श्रुतिस्मृतीतिहासादिचोदिताचारतत्परैः।
पञ्चयज्ञपरैर्नित्यं पञ्चपूजाविशारदैः॥
आदित्यमम्बिकां विष्णुं गणनाथं महेश्वरं
ब्राह्मणः पूजयेत्पञ्च पञ्चयज्ञपरायणः॥
कर्म ब्रह्मार्पणं कुर्यात्सर्वदेवमयः परः।
तस्मिन्दिव्याससक्तस्य सर्वभूतमयस्य च॥

---

[१] इच्छाक्रियाज्ञानशक्तियुक्तः। तै. पु.।

---

* शङ्करोपनिषद्भाष्यादौ द्रष्टव्यं।

सर्व्वस्यात्मनश्चैव सर्व्वव्यापकतेजसः। (१)
शुद्धाद्वैतात्मनस्तस्य न बहिःपूजनं विदुः॥
न कर्म लिप्यते तस्मिन् ज्ञानवज्ञात्मकेऽद्वये॥
देहाद्यैरविशेषेण देहिनो ग्रहणं निजं। (२)
प्राणिनां तदविद्योत्थं तावत्कर्मविधिर्भवेत्।
काम्यकर्माणि सन्त्यज्य नित्यकर्म समाचरेत्॥
नित्येन कर्म्मणा तुष्टः परमेशः प्रयच्छति।
अद्वैतंज्ञानमत्युग्रं तेन मुक्तो भवेन्नरः॥
इहामुत्रैकरूपत्वात् प्राणिनः (३) कर्म्मसंक्षये।
देहत्यागो विमुक्तिः स्यादिति वेदविदो विदुः॥

न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्त इति श्रुतेः।

अद्वैतनिरतो यत्र स देशः पुण्यवर्द्धनः।
तद्दर्शनपरा ये तु ते मुक्ताः स्युर्न संशयः॥
अद्वैतनिन्दां कुर्वन्ति ये मूढा दुःखभोगिनः।
ते सर्वे नरकं यान्ति मातृनिन्दापरा यथा॥

एवमनेकप्रकारेण बहुशिष्यान् धन्यान् कृत्वा अष्टमे वर्षे प्राप्ते श्रीमद्गोविन्दयोगीन्द्रस्य सदुपदेशात्परमहंसाश्रमस्वीकारं कृतवन्तः श्रीमच्छङ्करभगवत्पादाचार्य्यसर्व्वज्ञाः। ननु ब्राह्मणानां ब्रह्मचर्य्याद्याश्रमचतुष्टयमस्ति, तथा च श्रुतिः ब्रह्मचर्य्यं समाप्य

(१) सर्व्वव्यापकरेतस इति। स. पु.। का. पु.। वा. पु.। तै. पु.।
(२) नहि। वा. पु.।
(३) ज्ञानिनः। तै. पु.।

गृही भवेत् गृही भूत्वा वनी भवेत् वनी भूत्वाऽथ प्रव्रजेदिति एतैरेवाश्रमैरेव यथोक्तकर्म्मानुष्ठितैर्मुक्तिर्भवत्येव क्रममन्तरेण ब्रह्मचर्य्याश्रमात्परमहंसाश्रमस्वीकारः किमर्थमङ्गीकृतो भगवद्भिरिति तत्रापि कुटीचका-*-द्याश्रमाण्यतिक्रम्य परमहंसाश्रमस्वीकारश्चेति च प्राप्ते ब्रूमः ब्रह्मचर्य्याद्याश्रमेषु यत्र विराग उत्पन्नस्तदाश्रमादेव प्रव्रजेत् तदुक्तं, यदीतरथा ब्रह्मचर्य्यादेव प्रव्रजेत गृहाद्वा वनाद्वा अथ पुनरव्रती वा उत्सन्नाग्निको वा यदहरेव विरजेत तदहरेव प्रव्रजेदिति श्रुतेः, कुटीचकाद्याश्रमाणां परमहंसाश्रमाधिकारिविषयत्वाभावाद्भगवद्भिः पूर्णब्रह्मानुसन्धानविचक्षणैः भेदगन्धरहितान्तःकरणैः सर्व्वज्ञैः परमहंसाश्रम एवाङ्गीकृत इति निरवद्यम्॥ इत्यनन्तानन्दगिरिकृतौ आचार्य्यविजये अद्वैतस्वरूपकथनं नाम प्रकरणं तृतीयम्॥ * ॥

---

* कुटीचकः पुत्रान्नजीवी गृहस्थ इत्यर्थः।

———०※०———

## चतुर्थं प्रकरणं।

द्वे रूपे वासुदेवस्य चरञ्चाचरमेव च।

चरं संन्यासिनां रूपमचरं प्रतिमादिकं। इति

वचनबलाद्वासुदेवरूपमास्थाय प्रपञ्चोपास्य इव वर्त्तयन् अथातो ब्रह्मजिज्ञासेत्यादिव्याससूत्राणां व्यासमनोऽभिमतार्थप्रकाशकमद्वैतभाष्यं कुर्व्वन् विश्वजिदिव दिग्विदिग्वर्त्तमानानामन्तरादिजयमारभमाणः (१) पद्मपादहस्तामलकसमित्पाणिचिद्विलासज्ञानकन्दविष्णुगुप्तशुद्धकीर्त्ति-(२)-भानुमरीचिकृष्णदर्शनबुद्धिवृद्धिविरिञ्चिपादशुद्धानन्तानन्दगिरिप्रमुखैः शिष्यवरैः सेव्यमानः सर्व्वज्ञः श्रीशङ्करभगवत्पादाचार्य्यः चिदम्बरस्थलात् प्रदक्षिणमार्गेण श्रीमन्मध्यार्जुनं नाम शिवाविर्भूतस्थलविशेषं प्राप।

मध्यार्ज्जुनेशानमदृष्टपूर्व्वं- (३)

विद्यादिभिः पूजितपादपद्मं।

---

(१) अद्वैतभाष्यं कुर्व्वन् सर्व्वद्वैतवादिजयमारभमाण इति पाठान्तरं। स. पु.। विश्वजिदिव दिग्विदिग्वर्त्तमानमानमतवादिजयमारभमाण इति। तै. पु.।

(२) शुद्धकीर्त्तिरिति पाठान्तरं। बा. पु.।

(३) अदृष्टपूर्व्वं विद्यादिभिरिति। स. प.।

बुध्नोपचारै (१)रभजन् परेशं
निध्यायतां मोक्षफलैकहेतुं ।

तत्र किल भगवान् श्रीशङ्कराचार्य्यः सदाशिवमेवमब्रवीत् स्वामिन् मध्यार्ज्जुन सर्वोपनिषदर्थोऽसि सर्व्वज्ञोऽसि यदि निगमादीनां तात्पर्य्यगोचरो द्वैतनिर्णयः अद्वैतनिर्णयो वा पारमार्थिकः पश्यतां सर्वेषां जनानां संशयनिवृत्तिं कुर्व्वित्येवं प्रार्थितो मध्यार्ज्जुनेशः लिङ्गायात् सावयवरूपेण निष्क्रम्य मेघवद्गम्भीरगिरा दक्षिणं हस्तमुद्यम्य सत्यमद्वैतमिति त्रिरुक्त्वा लिङ्गायेणान्तर्दधे पश्यतां नराणां महदद्भुतमासीत् ।

तद्भक्ताश्च तदा समस्त- (२) मनुजास्तद्ग्रामदेशस्थिताः
शुद्धाद्वैतपरायणाः श्रुतिकथासञ्चोदिताचारगाः ।
कृत्वा सद्गुरुमेव शङ्करवरं तद्बोधितप्राभव-(३)
श्रीमन्त्रोपजपादुमागणपतीशार्काच्युतार्चापराः ॥

प्रातःस्नानविशुद्धाश्च पञ्चयज्ञपरायणाः ।
नित्यकर्म प्रकुर्वाणा ( ४ ) भगवत्प्रीतयेऽनघाः ॥

एवं तद्देशस्थान् .ब्राह्मणान् सर्व्वानद्वैतवादिनः कृत्वा प्र-

---

(१) बुद्धोपचारैरिति । का. पु. । वा. पु. । बुध्नोपचारैरिति च पाठान्तरं क्वचिदस्ति । बुध्नः शिवः तदीयैः उपचारैः पूजोपकरणसामग्रीभिरित्यर्थः ।

(२) समस्य इति पाठान्तरं । वा. पु. ।

(३) तद्बोधितप्राभव इति । वा. पु. ।

(४) प्रकुर्व्वन्ति । वा. पु. । का. पु. ।

मद्भिः शङ्कर इव शिष्यसमेतः समुद्रबन्धनहेतुभूतसेतुसमीपे रामेश्वरं नाम प्रसिद्धस्थलं प्रति जगाम।

रामेश्वरं रामकृतप्रतिष्ठं
कामेश्वरीभूषितवामभागम्।
महेन्द्रनीलोज्ज्वलदुत्किरीटं
भीमेश्वरं त्वामिह पूजयामि।

इति गङ्गाजलैः शुद्धैरर्चयामास शङ्करं।
शङ्करः पङ्कजैः पुष्पैरन्यैर्वन्यफलैस्तथा।

एवं महादेवमर्चयित्वा मासद्वयं तत्र सुखमास। तदानीं किल समागताः,

अद्वैतद्रोहिणः केचिल्लिङ्गाङ्कितभुजद्वयाः।
केचित् फाले त्रिशूलञ्च डमरुञ्च भुजद्वये॥
केचित् फाले लिङ्गचिह्नं हृदि शूलं तथाऽपरे।
केचित् फाले भुजद्वन्द्वे हृदि नाभौ च लिङ्गिनः॥
एवं महेशचिह्नानि धारयित्वा समागताः।
तेषां भेदं क्रमाद्वच्मि षड्विधानां परस्परम्॥

भुजद्वयलिङ्गाङ्कधराः शैवाः, फाले त्रिशूलधारिणो रौद्राः, भुजद्वये डमरुधारिण उग्राः, फाले लिङ्गचिह्नधारिणो भद्राः, (१) हृदि त्रिशूलं शिरसि पाषाणलिङ्गञ्च धारिणो जङ्गमाः, ललाटे भुजद्वन्द्वे हृन्नाभिषु लिङ्गधारिणः पाशुपता इत्युच्यन्ते ते सर्वे श्रीमच्छङ्करभगवत्पादाचार्य्यमिदमब्रुवन्

---

(१) भक्ता इति। वा. पु.। का. म.।

किंभोः यस्मिन् तव शिवतत्त्वमशेषदोषनिराकरणहेतुभूतमङ्ग-लमासीत्। शिवस्य जगत्कारणमूर्त्तेः (१) पञ्चभूतरूपाणि पञ्च लिङ्गानि सन्ति, त्रिशूलडमरुगततेजउत्पन्नौ रविचन्द्रौ लिङ्ग-द्वयं, एवं लिङ्गाष्टकं भगवतोऽष्टमूर्त्तयः(२)अन्तर्लिङ्गवहिर्लिङ्ग-संयोजनं कृत्वा चिदचिदैक्यारूढवुद्धिवृत्तिः निन्दानिन्दादिद्वन्द्व-रहितः सर्व्वं शिवमयमिति शिवाङ्गधारी सन् पश्यति स एव शिवः तद्धारणमात्रेण तन्मयः स एव मुक्तः तस्य ज्ञानमयत्वात् समस्तजनैरुपासनीयः, शिवस्यैव जगत्कारणता निर्वचनीया एवं किल।

ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलं।
ऊर्द्धरेतं विरूपाक्षं विश्वरूपाय नमोनमः॥ (३)

इत्यादिना रुद्रस्य सर्व्वोत्तमत्वं घटते। अस्यार्थः, ऋतम-सुखरूपं सत्यं महद्रूपं परं ब्रह्म एतद्विशेषणचतुष्टययुतं पुरुषं पुरीततिमध्ये (४) हृदयकमलकर्णिकायां वहिःप्रदेशे व्याप-करूपत्वेन शायिनं कृष्णपिङ्गलं कण्ठे कृष्णवर्णं, जटासु पिङ्गलवर्णं ऊर्द्धरेतमूर्द्धमुखरेतसं विरूपाक्षं विरूपाण्यर्केन्दुवह्निरूपाणि त्री-णि अक्षीणि यस्य तं विश्वरूपाय त्रित्याद्यष्टमूर्त्तित्वेन व्यापकत्वेन

(१) अनुत्तममासीत्। शिवस्य सत्कारमूर्त्तेरिति। वा. पु.। का. पु.। स. पु.।

(२ रविचन्द्रौ तद्द्वयमेकं लिङ्गं एवं लिङ्गाष्टकं भगवतोऽष्टमू-र्त्तयः लिङ्गद्वयं। वा. पु.। स. पु.। का. पु.। तै. पु.।

(३) विश्वरूपाय वै नम इति। वा. पु.। का. पु.। स. पु.।

(४) पुरान्तरजलमध्ये इति पाठान्तरं। वा. पु.।

विग्रहरूपः तस्मै तं नमो नम इति चतुर्थीद्वितीययोरर्थक्योकार-
णादन्वयः। तथा

द्यौर्मूर्द्धानं यस्य वेदा वदन्ति
खं वै नाभिश्चन्द्रसूर्य्यौ च नेत्रे।
दिशः श्रोत्रे वाग्विवृताश्च वेदा
मुमुक्षुर्वै शरणमहं प्रपद्ये॥

इत्यस्यायमर्थः, यस्य परमेश्वरस्य मूर्द्धानं शिरः द्यौः द्युलोकः,
स तु मेघमण्डलोपरिप्रदेशात् ब्रह्माण्डकर्परपर्य्यन्तं वेदा व-
दन्ति द्यौरेव परमेश्वरस्य मूर्द्धेत्यर्थः। तथा नाभिः खं आकाशं
वदन्तीत्यनुषङ्गः चन्द्रसूर्य्यौ नेत्रे चकारादग्निश्चेत्यर्थः। दिशः
श्रोत्रे कर्णावित्यर्थः वाग्विवृताश्च वेदा यस्य वाङ्मात्रेण
विस्तृता वेदाः चवर्णेन इतिहासपुराणादिकञ्चेत्यर्थः। तं पर-
मात्मानं मुमुक्षुरहं शरणं प्रपद्ये शरणं यामीत्यर्थः वैशब्देन
शरणागतानां मोक्षः सिद्धो भवति, एतादृशं शरणागतमोक्षप्रदं,
जन्ममरणारण्यदावानलमाश्रित्य तदीयमुद्राचाररूपादितद्‌द्भ-
क्तिनिरताः शाश्वते शिवके वसन्ति। किञ्च, अथर्व्वशिखायां,
जगत्कारणानुचिन्तनप्रकरणे, कारणन्तु ध्येयः सर्व्वैश्वर्य्यसम्पन्नः
सर्व्वेश्वरः, शम्भुराकाशमध्य इति शिवस्य जगत्कारणता प्रति-
पाद्यते। अथर्व्वशिरसि देवैः कस्त्वमिति प्रश्ने कृते तदा पृष्टः पर-
मेश्वरः सोऽब्रवीदहमेकः प्रथममासं वर्त्तामि च भविष्यामि च
नान्यः कश्चिन्मत्तो व्यतिरिक्त इत्यादि, मत्तो व्यतिरिक्तः मदन्यः
कश्चनेति भगवदुक्तेः तस्यैव सर्व्वात्मत्वं घटते सदात्मशक्तेति

सामान्यशब्दा अपि तत्परा एव तेषां जगदुपादानकारणपरत्वात् वासुदेवो वा इदमग्र आसीन्न ब्रह्मा न च शङ्कर इति वचनस्या-यमर्थः इदं जगदधिकृत्याग्रे सृष्टेः प्राक्तनकाले वसत्यस्मिन्प्रप-ञ्च इति वासः वासश्चासौ देवश्च वासुदेवः उकारश्छान्दसः स परमेश्वरः, तस्य सर्वप्रपञ्चलयकर्तृत्वात् स एक एवासीत्, जग-दग्रे स एक एव वर्त्तत इत्यर्थः, न ब्रह्मा चतुर्मुखः, न च शङ्क-रो विष्णुः, शं सुखं जीवनं करोतीति व्युत्पत्तेः तस्य स्थितिकर्त्तृ-त्वात् सर्व्वप्राणिरक्षणोद्योगकर्त्तेत्यर्थः। प्रलये जगदभावाज्जग-द्रक्षकाभावत्वमर्थतः सिद्धमेव, तयोः परमेश्वरेच्छाजातत्वात् मकारादुकारस्य उकारादकारस्य जनिदर्शनात्।

आनाभेर्ब्रह्मणो रूपमागलाद्वैष्णवं वपुः।
आशीर्षाद्रुद्रमीशानन्तदग्रे सर्व्वतः शिवं॥

इत्यादिना नरसिंहस्वरूपज्ञानेन शिवपरतत्त्वस्य रूढ़त्वात् परमेश्वरस्य कलारूपाणामेकादशरुद्राणां मध्ये शङ्करो विष्णु-रिति प्रसिद्धः रुद्राणां शङ्करश्चास्मीति श्रीकृष्णवचनगीताद-र्शनाच्च। शिवरहस्ये रुद्रयामले च दुर्वासोमुनेरुपदेशकाले महादेववचनानि।

अहमेकाक्षरः कर्त्ता परात्परतरः शिवः।
सदात्मा ब्रह्मविष्णुश्च लोकानामादिकारणं॥
पुराणः पूर्व्वगः पूर्व्वो ज्येष्ठः श्रेष्ठोऽहमव्ययः।
मदिच्छारूपिणी शक्तिर्जगत्संहारकारिणी॥
लुप्ता मय्येव सा सृष्टा पुनः सृष्टो मया ऽनघ।

सा महत्तत्वमुत्पाद्य त्रिगुणाङ्कुरकारणं ॥
अहङ्कारं समुत्पाद्य त्रैगुण्यं पूर्व्वतत्त्वतः ।
गुणत्रयात्मकान् कृत्वा रुद्रानेकादशाऽव्ययान् ॥
राजसं सृष्टिकर्त्तारं (१) कारयामास सादरं ।
सात्विकान्पालनपरान् तामसान्प्रलयेश्वरान् ॥
क्रमादवर्णात् मञ्ज्ञानानुवर्णाश्च मवर्णतः । (२)
तेषु मुख्यतमा ब्रह्मविष्णुरुद्रा इति त्रिधा ॥
अन्ये तदनुवृत्तिस्था एवमेकादशेश्वराः ।
तेषां विभूतयः सर्व्वे देवा लोकाश्चराचराः ॥
पृथक् पृथङ्नामयुतास्तत्तत्कर्मानुसारतः ।
ते सर्व्वे प्रलये ब्रह्मतेजसैव लयं गताः ॥
राजसे रक्तवर्णे च स तु ब्रह्मा समस्तभृत् ।
कृष्णे नारायणस्यैव तेजस्यस्तोऽभवत्पुरा ॥
रुद्रस्य शुक्लवर्णे तु ह्यस्तो नारायणः स्वयं ।
स तु रुद्रः प्रकृत्यन्तर्गतः शुक्लेन तेजसा ॥ (३)
मदिच्छा शुक्लवर्णा सा मय्येव विलयं गता ।
अतोऽस्याऽनन्तः सर्व्वार्थवेदैरपि न गोचरः ॥
वेत्ति कश्च न मन्मायां जन्मस्थितिलयावहां ।
अतो रुद्रार्च्चनपरा रुद्रसूक्तजपान्विताः ॥

(१) राजसान् सृष्टिकर्त्तारमिति । का. पु. । स. पु. । तै. पु. ।
(२) क्रमादवर्णसञ्ज्ञातमवर्णाश्च मवर्णग इति । का. पु. । स. पु. । वा. पु. । तै. पु. ।
(३) शुक्लेन चेतसेति । वा. पु. । का. पु. । स. पु. ।

पञ्चाक्षरीजपपरा रुद्राक्षाभरणैर्युताः ।
भूतिभूषितसर्व्वाङ्गाः सदा ध्यानपरायणाः ॥
ईश्वरं रुद्रमव्यक्तं व्यक्तरूपं जगत्त्रये ।
येऽर्च्चयन्ति नरश्रेष्ठास्तेषां मुक्तिः करे स्थिता ॥
अतस्त्वं भूतिरुद्राक्षधारणं कुरु सर्व्वदा ।
कुरु नित्यं महादेवपूजनं भक्तिसंयुतः ॥
दुर्व्वाससे मुनीन्द्राय ह्येवमुक्त्वा सदाशिवः ।
अन्तर्दधे सदाचारसक्तोऽभून्मुनिसत्तमः ॥ इति ॥

अतो दुर्व्वास-आदिभिस्तत्स्वरूपत्रिलिङ्गिरुपासितं शिवतत्वाचारकथनमिति निरवद्यं । अथर्व्वशिरसि, अथ पुरुषो ह वै श्रीनारायणोऽकामयत प्रजाः सृजेयेति नारायणात् प्राणो जायते मनः सर्व्वेन्द्रियाणि च खं वायुः ज्योतिरापः पृथिवी विश्वस्य धारिणी नारायणाद्ब्रह्मा जायते नारायणात् प्रजापतिः प्रजायते रुद्रा वसवः सर्व्वाणि च छन्दांसि नारायणादेव समुत्पद्यन्ते नारायणात्प्रवर्त्तन्ते नारायणात् प्रलीयन्ते अथ पुरुषो ह वै नारायणो ब्रह्मा नारायणः शिवश्च नारायणः शक्रश्च नारायणः ऊर्द्ध्वञ्च नारायणः अधश्च नारायणः आकाशश्च नारायणः अन्तर्व्वहिश्च नारायणः नारायणादेवेदं सर्व्वं यद्भूतं यच्च भव्यं निष्कलङ्को निरञ्जनो निर्व्विकल्पो निराख्यातः शुद्धो देवः एको नारायणः न द्वितीयोऽस्तीत्यादिकस्योपनिषदस्यायमर्थः, नरो ब्रह्मा प्रथमजीवः सृष्टेः पूर्व्वमेव जातत्वात् तत्कृता सृष्टिरिति प्रसिद्धेः राजसगुणप्रधानो रुद्रः तदादयो विष्णुरुद्रे-

न्द्रादयश्चतुर्द्दशलोकवासिनः प्राणिनः तेषां समूहो नारं तदेवा-
यनं स्थानं यस्य आत्माकारेण सर्व्वव्यापकः परमेश्वरः रषाभ्यां
नो णः समानपद इति सूत्रेण नस्य णत्वे कृते नारायण इति
रूपं निष्पन्नं तमेवांशाः सर्वे देवाः नमो रुद्रेभ्यो ये पृथिव्यां ये-
ऽन्तरीक्षे ये दिवि येषामन्नं वातोवर्षमिषवस्तेभ्यो दश प्राचो दश
दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्द्ध्वास्तेभ्यो नमस्ते नो मृडय-
न्त्वित्यादिप्रमाणात्। नमो ज्येष्ठाय च कनिष्ठाय चेत्यादिना
गुणातीतवृत्तौ परमेश्वरे ज्येष्ठत्वमर्थतः सिद्धं तस्य सर्व्वोत्पत्ति-
कारणत्वात् कनिष्ठत्वन्तु मकारविलक्षणे प्रकृतिजाते रुद्रे वर्त्तते
उकाराकारयोस्तज्जन्यत्वात् तदात्मकत्वं सिद्धं। यतो ब्रह्म-
विष्णुरुद्रास्ते संप्रसूयन्त इति श्रुतेः। कारणकार्य्ययोर्ज्येष्ठ-
कनिष्ठभावो युक्त एव। स नारायणः अकामयत इच्छां कृतवान्
किमिति प्रजाः सृजेयेति तस्मात् खं वायुर्ज्योतिरापः पृथिवी वि-
श्वस्य धारिणी अजायन्त पृथिवी कीदृशीत्युक्ते विश्वस्य प्रपञ्चस्य
धारिणीत्यर्थः। तदनु नारायणात्प्राणो जायते मनः सर्व्वेन्द्रि-
याणि चेति पाठक्रममन्तरेण कथमित्युक्ते तैत्तिरीये। एतस्मा-
दात्मन आकाशः सम्भूतः आकाशाद्वायुः वायोरग्निरग्नेरापः अद्भ्यः
पृथिवी पृथिव्या ओषधयः ओषधीभ्योऽन्नमन्नात्पुरुषमित्यादि
भूतसृष्टिं विना प्राणादिसृष्टेरभावात् प्राणानां वायुरूपत्वाच्च
प्राणादिसृष्टिः भूतसृष्ट्यनन्तरभाव्येव भवितुमर्हति। यद्वा
प्रकृतेर्महान् महतोऽहङ्कारः अहङ्कारात्पञ्च तन्मात्राणीति
सृष्टिक्रमदर्शनात् अहङ्कारादेव भूतोत्पत्तिर्युक्तेव भाति तस्य

गुणत्रयात्मकत्वाद्भूतानामपि तथात्वात् । अतः सगुणाद्ब्रह्माद्भूतप्रजाप्राणमनोमुख्यसृष्टिरूपिता, कार्य्यस्य कारणानुरूपत्वात् कुलालादिना घटादिवत् । रुद्रविष्णुब्रह्मादिहृदयपुण्डरीकेषु व्यापकरूपेण स्थितस्यात्मनः सकाशात् भूतादिसृष्टिं केचिदिच्छन्ति । सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्व्वान् कामान् सह ब्रह्मणा विपश्चितेति आकाशाद्वायुरित्यादि एतच्छब्देन यो वा परमेश्वरः स्वयं निर्गुणोऽपि सर्व्वप्राणिबुद्धिगुहाविहरणशीलः सन्, तस्मात भूतोत्पत्तिरिति । ब्रह्मा भूतोत्पत्त्यनन्तरं सृष्टिं करोमीति बहुकालं विचार्य्य स्वान्तर्गतमात्मतेजः सूर्य्याकारेण सृष्टवान् मन एव चन्द्रं सर्वाङ्गारकं वाङ्मयं बुधं ज्ञानसुखमयं गुरुं शुक्रमयं शुक्रं क्लेशमयं शनिं चकार । सूर्य्यादिगोलकान्यपि परमेश्वरेणैव प्रतिभान्ति ।

न तत्र सूर्य्यो भाति न चन्द्रतारकं
नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेवभान्तमनुभाति सर्व्वं
तस्य भासा सर्व्वमिदं विभाति ॥ इति श्रुतेः ।

तस्मान्नारायणाद्ब्रह्मा जायते नारायणात्प्रजापतिः प्रजापरिपालनशीलः स्थितिकर्त्ता विष्णुर्जायते अन्ये नव रुद्रा वसवः सर्व्वाणि छन्दांसि एतानि सर्व्वाणि नारायणादेव समुत्पद्यन्ते तस्य जगत्कारणत्वात् तस्मादेव प्रवर्द्धन्ते तस्मिन् लये लीयन्त इत्यर्थः । अथ पुरुषो ह वै नारा-

यण इत्यादिना तस्य विश्वरूपत्वं प्रतिपादितं। निष्कलङ्को निरञ्जनो निर्व्विकल्पो निराख्यातः शुद्धो देवः एको नारायण इति जगदतीतस्य परमात्मनो लक्षणमेतत्, कलङ्कं नाम पुण्यपापबन्धः तदभावान्निष्कलङ्कः, अञ्जनं अज्ञानं तदभावान्निरञ्जनः, अयमात्मा अन्यो वा आत्मेति संशयाभावान्निर्व्विकल्पः, आख्यातं नाम रूपगुणकर्म्मादिस्तदभावात् निराख्यातः, शुद्धः शुक्लतेजोमयः, यच्छुक्लं तद्ब्रह्म, कं ब्रह्म खं ब्रह्म आकाशशरीरं ब्रह्मेति।

अचिन्त्यमव्यक्तमनन्तरूपं
तथारसं नित्यमगन्धवच्च यत्।
अनाद्यनन्तं महतः परं ध्रुवं
निचाय्य तं मृत्युमुखात् प्रमुच्यते॥ इति श्रुतिभ्यः।

दिव्यत इति देवः तेजः तदन्यत्वाभावात् एकः एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चनेति श्रुतेः आत्मा वा इदमेक एवाग्र आसीदिति एक एव रुद्रो न द्वितीयोऽवतस्थ इति च। स नारायणः अद्वितीयः प्रलये द्वितीयसत्तामात्राभावात् एक एव भाति, एकमेव ब्रह्म विभाति निर्व्वाणमिति श्रुतेः। महोपनिषदि। एको ह वै नारायण आसीन्न ब्रह्मा नेशानो नाग्नीषोमौ नेमे द्यावापृथिवीत्यादि श्रुतेरयमर्थः, नारायण एक एव आसीद्यदा कार्य्याभावः स तु प्रलयो न तत्र ब्रह्मविष्णुभावः ईशानशब्दवाच्यो विष्णुः किमेतयोरभावस्य सिद्धत्वात् अग्नीषोमयोरभावः शङ्कनीयः? नेमे द्यावापृथिवीति सिद्धमेव। एवं,

नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योमापरो यत्
किमावरीवः कुहकस्य शर्म्मन्नम्भः किमासीद्गहनं गभीरं।
न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः॥(१)

इत्यादि, ऋङ्मन्त्राः ईश्वर एव जगत्प्रवादीन् प्रतिपादयन्ति। अस्यार्थः। असत् अदर्शनयोग्यभूतावाकाशवायु तदादि तादृग्वस्तु नासीत् तदानीं प्रलये न विद्यत इत्यर्थः। (२) सत् तेजोम्बुपृथिव्यस्तदादि वस्तु च नो आसीत्, रजःकारण पृथिव्यपि नासीत् व्योमकारणमणुरूपं अपरः कारणान्युदकवायवः नासुः, लिङ्ग व्यत्ययः छान्दसः। कुहकस्य ब्रह्मज्ञानस्य(३) आवरीवः आवरणानि महदहङ्कारादि सप्त शर्मन् ब्रह्माण्डञ्च किमासीत् किञ्च [illegible]दित्यर्थः। तदण्डोपरि विलसितं गहनं दुष्प्रविष्टं गभीरं नमितप्रवेशं सान्द्रतया व्याप्तमम्भस्तोयं किमासीत् तदपि नासीत्यर्थः। मृत्युः सर्व्वलोकत्रासप्राणिप्राणहर्त्ता नासीत्। (४) तर्हि मृत्युरहितसमये अमृतं मृत्युनिवर्हणहेतुभूतं अमृत मृत्योस्तेजस्तिमिरयोरिव परस्परवैषम्यदर्शनात् विपक्षाभावे स पक्षाभावस्य श्रेयस्त्वादमृतस्याप्यभाव इत्याह अमृतं नासीत्। कथमित्युक्ते . ईश्वरव्यतिरिक्तसर्व्वाभावस्य युक्तत्वात् तदभाव

---

(१) प्रज्ञात्या इति केचित्।

(२) असत् [illegible] न सृष्टेः प्रागित्यर्थः। स. पु.। तै. पु.।

(३) कुहकस्य ब्रह्मणः इति। बा. पु.।

(४) सर्व्वप्राणहर्त्ता इति। का. पु.। स. पु.।

उचित एवेत्यर्थः रात्र्यह्नोः कारणाभावात् कार्य्याभावः सिद्ध एव। ननु सर्वाभावे ईश्वरस्याप्यभावो भवतु नाम, एकस्मिन् काले स्वत एव जगदस्तं गतं भवति, अन्यस्मिन् काले पुनर्निजरूपेणोत्थितं भवति। तथेदं (१) तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यामव्यकार्षीदिति श्रुतेः अशोकपुष्पविकासादिवत्कालतः प्रपद्यते। (२) जगद्बीजं तु जगत्कर्मैव।

कर्म्मणा जायते लोकः कर्म्मणैव हि लीयते।

इति जैमिनिराचार्य्या मन्यते। पापकर्मशीलस्य नरस्य पुण्ययोनिसम्भवात्मनीश्वरेण कथं न कृतं (३) कर्मानुकूलं जन्मेति चेत् कर्म्मैव स्वमार्गेण जीवं बुद्ध्यादिलिङ्गशरीरबन्धं नयति तस्य घटकत्वाघटकत्वयोरनुन्यसमर्थत्वात् अतः कर्म्मणा जगदुत्पद्यमाने किमन्तर्गतेनेश्वरेणेति प्राप्ते ब्रूमः तत्सुक्ते एकं सन्तं तद्बहुधा कल्पयन्ति बहुधा नानाप्रमाणैः सर्वाभावे प्रलये सन्तं वसन्तं परमात्मानमेकमद्वितीयं कल्पयन्ति वेदाः स्वयमेव जगज्जन्मादि कारणं ब्रह्म निरुपाधिकं (४) वर्त्तत एवेत्यर्थः शाखान्तरे तैत्तिरीये। असन्नेव स भवति असद्ब्रह्मेति वेद चेत् अस्ति ब्रह्मेति चेद्वेद सन्तमेनन्ततो विदुरिति। ब्रह्म असत

---

१ तर्हीदमिति का. पु.। तदेवमिति। स. पु.। तै. पु.।

२ कालतः प्राप्यते इति। स. पु.। का. पु.। तै. पु.।

३ पुण्ययोनि सम्भवत्वं नेश्वरेण विनेति कथं कुत इति। वा. पु.।

४ ब्रह्मविष्णुरुपाधिकं इति। वा. पु.।

असत्यं असदप्रमाणं वेदेद सः असन्नेव भवति असन्नास्तिको भवति ब्रह्म सूक्ष्मत्वात् व्यापकत्वाच्च तथा प्रसिद्धं शुद्धबुद्धमुक्त-स्वरूपं ब्रह्म अस्तीति वेद चेत् वेदितुः फलमाह सन्तमेनं ततो विदुरिति। एवमीश्वरसद्भावे प्रमाणमप्यन्यथित्वा तस्य मनो-वागतीतत्वेन दुःसाध्यत्वात् तदिच्छासम्भूतमकारप्रधानसगुण-रुद्रस्योपासनं तच्चिन्हाङ्कनं युक्तमेव। एवं प्राप्ते शाङ्कराचार्य्या भोः तप्तलिङ्गाङ्कितभुजद्वय विद्वेषवीरनामक सत्यमुक्तं भवता ऋतं सत्यं परं ब्रह्मेत्यादयः भवदुक्ताः सर्वाः श्रुतयः परमेश्वरं ब्रह्मांशेन सृष्टिं कुर्वाणं विष्णवंशेन पालनं कुर्वाणं रुद्रांशेन लयं कुर्वाणं शुद्धमद्वैतरूपमव्ययमनादि ब्रह्म प्रशंसन्ति ताः भवत-व्याख्याताः, मयापि च व्याख्याता एव तात्पर्य्यस्यैकरूपत्वात्, किञ्चैतावन्मात्रं विरुद्धगप्रमाणमस्ति तप्तलिङ्गाद्यङ्कनन्धारयिता व्यमिति तदसत् धारणबीजश्रुत्यादिप्रमाणाभावात् निष्प्रमाण-त्वेनैव ब्राह्मणोचितवेदोक्तगर्भाधानादिसत्कर्मसंस्कृतस्य शरीरस्य निर्मूलतप्तता कथं श्रेयःपरम्पराजनिका भविष्यति परन्तु प्रत्यवायधात्र्येव। कथमिति उक्तञ्च ब्रह्मयामले।

नाभेरूर्द्ध्वं सोमपास्तु नाभ्यधस्तादसोमपाः।
देवास्तिष्ठन्ति विप्रेन्द्रे वेदवेदाङ्गपारगे॥
शिखां शिरो ललाटञ्च कर्णौ घ्राणं कपोलकम्। (१)
जिह्वायाञ्च तथा चोष्ठौ चिबुकं कण्ठमेव च॥
अंशद्वयं भुजद्वन्द्वं बाहू हस्तयुगन्तथा।

---

१ तथास्यकमिति। वा. पु.।

वक्षोनाभिः कटिर्लिङ्गं वृषणं चोरुजानुकम्।
गुल्फौ पादौ समाश्रित्य मदाद्याः सर्वदेवताः।
पितर ऋषयश्चैव स्नानाद्याह्निकमिश्रितैः। (१)
नित्यादिकर्मभिस्तृप्ता भवामो नात्र संशयः।

इति ब्रह्माण्डकेतुसम्वादः। श्रुतिश्च। यावतीर्वै (२) देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति तस्मात् तथाविधतनोर्जीवनदशायां कृते तापे देवाः पलायन्ते तप्तायःसान्निध्यान्मनुष्या इव।

तथाविधतनोरस्य तापनाङ्कं करोति यः।
एनं शप्त्वा (३) पलायन्ते देवाः शीर्षादिवासिनः।
पतितोऽयं भवत्येव शूद्रवच्चितिकाष्ठवत्।
व्याधिं विना कर्म्मयोग्ये विप्राङ्गे चिह्नमीक्ष्य च।
लोकेश्वरं भानुमीक्षेदथवा ह्रदमाविशेत्॥

इत्यादिबहूनि वचनानि प्रमाणानि सन्ति। श्रुतावपि, योऽन्यां देवतामुपास्ते अन्योऽहमस्मीति न स वेद यथा पशुरिति। यः पुरुषः स्वस्मादन्यां देवतामुपास्ते असौ देवता अन्या सर्वज्ञा सच्चिदानन्दादिलक्षणसम्पन्ना देवताद्वारा किञ्चिद्ब्रह्मला-

---

१ स्नानाद्यक्षरमिश्रितैः। का. पु.। स. पु.। स्नानाद्यक्षरैः श्रितैः। वै. पु.।

२ यावतीर्य। वा. पु.।

३ एनं त्यक्त्वा। वा. पु.। का. पु.।

दिगुणविशिष्टोऽहमन्योऽस्मीति न स वेद स पुनर्व्वेदज्ञानसम्पन्नो न स्यादित्यर्थः उक्तार्थं दृष्टान्तेन द्रढयति यथा पशुरिति पशोर्यथा विवेकज्ञानाभावः तथैवेत्यर्थः परीक्ष्य लोकान् कर्म्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन कर्म्मणेत्यादिमुण्डकोपनिषदुपदेशवशात् (१) ब्राह्मणः कर्मचितान् कर्मसम्पादितान् अनित्यान् लोकान् दृष्ट्वा निर्व्वेदमायात् । अकृतो मोक्षः कृतेन कर्मणा ( २ ) नास्तीति तस्मात् मोक्षप्राप्तये, तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमित्यादिना गुरुमभिव्रजेत् अनेन सद्गुरूपदेशेनैव ब्रह्मलक्षणाग्निज्ञः सर्वाशुभकर्मनिर्मूलनपरः संसारार्णवमतिक्रम्य सर्व्वावस्थास्वात्मानं ध्यात्वा मुक्तो भवति । न वह्निश्चिह्नितताङ्कादिना प्रयोजनम्, चर्मदाहनिमात्रफलमस्ति लिङ्गिनः, मुक्तिस्तु ज्ञानतेजोनिरस्ताज्ञानान्धकारस्यैव भवति ( ३ ) । केवलं रुद्रोपासनायाः पुण्यलोकप्राप्तिरेव (४) फलं न तु मुक्तिः तथास्तु जीवेशाभेदज्ञानादेव मुक्तिः ।

तं दुर्दर्शं गूढमनुप्रविष्टं
गुहाहितङ्गह्वरेष्ठं पुराणं ।

---

१ उपदेशवत् । का. पु. । वा. पु. । स. पु. ।

२ कृतो न कर्म्मणा । तै. पु. ।

३ न वह्निश्चिह्नितताङ्कादिना प्रयोजनं चर्म्मदाहनिव्यतिरिक्तमस्ति ज्ञानतेजोभिरज्ञानान्धकारस्यैव मुक्तिदर्शनात् । वा. पु. ।

४ रुद्रोपासनया पुण्यलोकप्राप्तिरेव । वा. पु. ।

अध्यात्मयोगाधिगमेन देवं (१)
मत्वा धीरो हर्षशोकौ जहाति॥ इति।
नायमात्मा प्रवचनेन लभ्यो
न मेधया न बहुना श्रुतेन।
यमेवैष वृणुते तेन लभ्य-
स्तस्यैष आत्मा वृणुते तनूं स्वां॥ इति।
अशरीरं शरीरेषु अनवस्थेष्ववस्थितं।
महान्तं विभुमात्मानं मत्वा धीरो न शोचतीति॥

तस्माद्गुरुकटाक्षागतशुद्धाद्वैतविद्यामाश्रित्य अभेदकल्प-तरुफलरसपानेन तृप्तो भवेदिति श्रीमद्गिराचार्य्यैरेवमुक्तः विद्वेषवीरनामको लिङ्गभृद्ग्रणीरिदमाह,

स्वामिन् त्वमेव शरणं मम सर्वदाऽसि
संसारसर्पविषदग्धतनुं नयाशु। (२)
मामद्य युष्मदतिनिर्मलवेदवाक्यै-
र्नष्टा भिदाऽस्मि शिव एव जगत्पिताऽसि॥
महादेवार्चनफलं गुरो त्वमसि सत्तम।
अद्वैतामृतदातृत्वे (३) रुद्रादप्युत्तमोत्तमः॥

इति आचार्य्यशिरोमणिं स्तुतिपात्रं मुहुर्मुहुर्नत्वा तदी-

१ अध्यात्मयोगानुमतेन देवं। स. पु.। अध्यात्मयोगानुगतेन देवं। वा. पु.।

२ नयाशु। स. पु.। का. पु.।

३ अद्वैतामृतदातृत्वं। का. पु.। वा. पु.। स. पु.।

यचरणोदकपानं तदुक्ताचारलक्षणं शिरसा परिगृह्य स्वकुल ग्रामदेशस्थान् सर्वानप्यद्वैतवर्त्तिनः कृत्वा श्रीमत्परमाचार्य्यगुरुमभिवाद्य सुखमास ॥ इत्यनन्तानन्दगिरिकृतौ शिवमतनिवर्हणं नाम चतुर्थं प्रकरणं ॥ ४ ॥

---०*०---

एवं लिङ्गादिधारणकारणे शिवमते (१) निरस्तेऽप्याराध्याः केचन पीठार्चननिरताः प्राणलिङ्गधारिणो निरवशेषभक्षकाः (२) फाले लिङ्गधारिणः शुभ्रविभूतिभूषितसर्वाङ्गाः शिरःकण्ठबाहुषु सहस्रपरिमितरुद्राक्षमालाभूषिताः प्रतिपक्षचण्डभैरवविपक्षशूलभक्तायगण्यपरमतकालानलादयः श्रीशङ्कराचार्यं दृष्ट्वा इदमूचुः कस्त्वं सन्यासिन् मायावेषधारीव समागत्य षड्विधशैवाचारं (३) सकलवेदप्रमाणं परित्यज्य विद्वेषवीरादीन् मतभ्रष्टान् कृत्वा गन्तुमायतो भवसि प्रतिपक्षचण्डभैरवमाराध्यमतपद्मभास्करं मां विद्धि, किं शैवमतं नास्ति। (४) ब्राह्मणादुत्तमं प्रोक्तं वैष्णवं मुनिसत्तम। वैष्णवादधिकं शैवमित्यादिना नारदं प्रति ब्रह्मोक्तेः शैवमतस्य श्रेष्ठत्वं दर्शितं। तादृशमुत्तमोत्तममतं परित्यज्य ब्राह्मणस्य निपतनं वृक्षाग्रमारूढस्य पुरुषस्याधःपतनमिव प्रतिभाति। ब्राह्मणमूलाद्वैष्णवमतशाखामवलम्ब्य (५)। शैवाग्रं गतस्य रूढपतनं किमर्थं भव-

---

१ शिवभक्ते। वा. पु.।

२ निरवशेष भक्षकाः। का. पु.। वा. पु.।

३ षड्विध शैवागमाचारं। स. पु.।

४ किं शैवे जनताऽस्ति। स. पु.। का. पु.। तै. पु.।

५ वैष्णवस्य मतंमवलम्ब्य। का. पु.। स. [illegible]।

द्भिः कृतं। मताधिदेवस्य रुद्रस्य परमत्वं नास्तीति यदुच्यते तत्प-रमत्वं नमस्ते रुद्र मन्यव इत्यादि शतरुद्रमन्त्रेषु सर्व्वजगदुपा-दानकारणमभूत्। वेदपुरुषोऽपि रुद्र इत्यर्थमुपक्रम्य तत्स्वरूप-स्यातिरौद्रत्वात्सर्वोत्तमत्वाच्च वेपमानशरीरः चिरं तूष्णीं स्थित्वा स्वापराधनिवृत्तये प्रतिपदं नमस्कारपुरःसरमेव स्तुतिं [illegible]त् हे रुद्र ते तव मन्यवे कोपाय चतुर्द्दशभुवनलयहेतुभूताय [illegible] उत तदनन्तरं ते तव लयहेतवे इषवे बाणाय नमः हे रुद्र ते त[illegible] धन्वने चापाय नमोऽस्तु ते बाहुभ्यां पाशुपतपिनाकधारि-भ्यां (१) नमः इत्यादिषु मन्त्रेषु प्रतिपदं बहुधा देवं नत्वा निवृ-त्तापराधोऽभूत्। उतामृतत्वस्येशान इति पुरुषसूक्तमध्यवर्त्तिना मन्त्रवरेण धर्म्मार्थकाममोक्षेषु चतुर्व्विधपुरुषार्थेषु मध्ये मोक्ष-रूप पुरुषार्थस्य श्रेष्ठत्वात् तस्य ईशानः रुद्रः कर्त्तेत्यनेन शिवस्य सर्व्वोत्तमत्वं। किञ्च पुरुषसूक्तस्याधिदैवं रुद्रः तस्य ऋषिर्ना-रायणः पुरुषो देवतेति पुरुषो रुद्र एव, तस्य सहस्रशीर्षत्वं सह-स्राक्षत्वं सहस्रपात्त्वं सिद्धमेव नमः सहस्राक्षाय शतधन्वन इत्या-दिबहुश्रुतिभ्यः।

विश्वतश्चक्षुरुत विश्वतोमुखो
विश्वतोबाहुरुत विश्वतस्पात्
सं बाहुभ्यां धमति सं पतत्रैरित्यादिश्रुतेः।
इदमिदानीं चोद्यं। (२)

---

१ पाशुपतपिनाकधारणयोग्याभ्यां। वा. पु.।
२ चोद्यते। सै. पु.।

सहस्रशीर्षं देवं तं विश्वाचं विश्वसम्भवं।
विश्वं नारायणं देवमक्षरं परमं पदं॥

इत्यादिना सहस्रशीर्षादिसाम्यात्सूक्तं नारायणपरमिति चेन्न उपसंहारविरोधात्। उपक्रमस्य दौर्व्वल्ये उपसंहारवशादुपक्रमनयनस्य मीमांसासिद्धत्वात्। प्रथमशाखाब्राह्मणे शतपथे श्वेताश्वतरोपनिषदि पुरुषसूक्तमुक्ता उपसंहार एवं क्रियते।

ततो यदुत्तरतरं तद्रूपमनामयं,
य एतद्विदुरमृतास्ते भवन्ति,
अथेतरे दुःखमेवापि यन्ति।
सर्व्वाननशिरोग्रीवः सर्व्वभूतगुहाशयः।
सर्व्वव्यापी स भगवान् तस्मात्सर्व्वगतः शिवः॥ इति।

एवमुपक्रमोपसंहारयोरेकवाक्यता स्यात् सहस्रशीर्षा पुरुष इत्यनेन सर्व्वाननशिरोग्रीव इति प्रतिपादितस्यार्थस्यानुक्लत्वात्। तन्मध्ये ह्रीश्च ते लक्ष्मीश्च ते पत्न्यौ अहोरात्रे पार्श्व इति वाक्यद्वयेनापि प्रतिपादितः शिव एव। ह्रीः गङ्गा लक्ष्मीः पार्व्वतीत्यर्थः। तत्पतित्वं रुद्रस्य घटते। उक्तञ्च स्कान्दे।

हिमाद्रादपतन्मौलौ गङ्गा रुद्रस्य वेगतः।
तदीयभारसम्भ्रान्तो ह्यवादीत्तां सदाशिवः॥
ह्रीमती भव नात्युच्चैर्वर्त्त सम्प्राप्य मामिह।
पुरुषं पुरुषश्रेष्ठं ब्रह्मविद्यादिकारणं॥
सा तं नत्वा महादेवं तदाप्रभृति भक्तितः।

स्त्रिया जटासु(१) निक्षिता स्त्रीरिति प्रोच्यते बुधैः ॥

रुद्रयामले ।

तस्याङ्कमञ्चमारूढ़ा (१) शक्तिर्माहेश्वरी परा ।
महालक्ष्मीरिति ख्याता श्यामा सर्वमनोहरा ॥
तस्यास्तेजःकणाज्जाता लक्ष्मीवाक्कोटयः पुरा ।
शिवतेजःसमुद्भूता हरिब्रह्मादिकोटयः ॥
क्रियन्ते पुनरेवैते तत्र तत्र लयानुगाः ।

इति गङ्गालक्ष्मीपतित्वं शिवस्यासाधारणमित्यविरुद्धं । उत्तरवाक्ये अहोरात्रे पार्श्वे अहश्च रात्रिश्च अहोरात्रे तस्य द्विवचनान्तत्वात् अहोरात्रे पार्श्वे यस्य, अहोरात्रपार्श्वत्वं च रुद्रस्यैव । दक्षिणपार्श्वस्य शुद्धस्फटिकसङ्काशत्वात् अहोरूपपार्श्वत्वं । वामपार्श्वस्य देवीभागत्वेन श्यामवर्णत्वाद्रात्रिरूपपार्श्वत्वञ्च रुद्रस्यासाधारणमेतत् ।

अतः सूक्तस्य शिवपरत्वेन शिवस्यैव जगत्कारणत्वात् सर्व्वापेक्षया तन्मतस्य (२) प्राबल्यं प्राप्तं । अथर्व्वशिरसि ॥ भगवता परमेश्वरेण देवान् प्रति स्वस्य सर्व्वात्मकत्वं प्रतिपादितं । सोऽहं नित्यानित्योऽहं ब्रह्माहं उपाङ्गः प्रत्यङ्गोऽहं दक्षिणश्चोदञ्चोऽहं मधश्चोर्द्धञ्च दिशश्च विदिशश्चाहं पुमानपुमान् स्त्रियश्चाहं गायत्र्यहं सावित्र्यहं सरस्वत्यहं त्रिष्टुप्जगत्यनुष्टुबहं छन्दोऽहं

---

१ तपःसु । वा. पु. ।

१ तस्याकमञ्चमारूढा । का. पु. । स. पु. । ते. पु. ।

२ तन्मतस्य । स. पु. । बा. पु. । का. पु. ।

गार्हपत्योऽहं दक्षिणाग्निराहवनीयोऽहं सत्योऽहं गौरहं गौर्य्यहं ज्येष्ठोऽहं श्रेष्ठोऽहं वरिष्ठोऽहमापोऽहं तेजोऽहमृग्यजुः-सामाथर्व्वाङ्गिरसोऽहमक्षरमहं क्षरमहं गुह्योऽहं गोप्योऽहं अरण्योऽहं पुष्करमहं पवित्रमहमग्रञ्च मध्यञ्च बहिश्च पुरस्ताद्दशसु दिक्ष्ववस्थितमनवस्थितञ्च ज्योतिरित्यहमेवं सर्व्वं च मामेव मां यो वेद सर्व्वान् वेदेत्यादि (१) भगवतो विश्व रूपत्वं प्रदर्शितं व्यापकचैतन्यस्य रुद्रस्यैव, रुदत्या स्वशक्त्या लोकान् द्रावयतीति रुद्रः ब्रह्मादिप्रलयकर्त्तेत्यर्थः॥ अत एवोक्तं शिवरहस्ये।

ध्येयत्वे तव साक्षिणो मुनिगणाः ज्ञानप्रदत्वे शुको
वन्द्यत्वे निगमाः स्वभक्तविमताक्रान्तौ (२) कृतान्तादयः-
नित्यत्वे भगवान् पितामहशिरःसम्वृन्दमाद्यन्तयोः
शून्यत्वे च वराहहंसवपुषौ पद्मासनपद्मासनौ॥

इत्यादिप्रमाणैः शिवस्य सर्व्वात्मकत्वं हरिब्रह्मेन्द्रादिकर्त्तृत्वं घटते तद्भक्तानान्तल्लिङ्गरुद्रविभूत्यादिधारणात् पीठाद्यर्चनया रुद्राध्यायजपेन च सर्व्वपापविनिर्मुक्तः शिवसायुज्यं प्राप्नोतीति निरवद्यं।

उक्तञ्च स्कान्दे रुद्रप्रशंसाकाण्डे।

स्तेयं कृत्वा गुरुदारांश्च गत्वा

---

१ सर्व्वान्देवान् वेदेत्यादि। तै. पु.।

२ स्वतःकविमतक्रान्तौ। वा. पु.। स्वतर्कविमतक्रान्तौ इति केचित्।

सुरां पीत्वा ब्रह्महत्याञ्च कृत्वा।
भस्मच्छन्नो भस्मशय्याशयानो
रुद्राध्यायी मुच्यते सर्वपापैः॥
कोटिजन्मार्जितैः पुण्यैः शिवे भक्तिः प्रजायते।
बहुनाऽत्र किमुक्तेन यस्य भक्तिः शिवे दृढ़ा।
महापापौघपापौव-(१)-कोटिग्रस्तोऽपि मुच्यते॥

इति शिवगीतावाहृढ़ोक्तेः। पुनरपि शिवगीतासु मुनीन् प्रति सूत इदमाह।

धर्म्मार्थकाममोक्षाणां पारं यास्यथ येन वै।
मुनयस्तत् प्रवक्ष्यामि व्रतं पाशुपताभिधं॥
कृत्वा तु विरजां दीक्षां भूतिरुद्राक्षधारणं।
जपन्तो वेदसाराख्यं शिवनामसहस्रकं।
सन्त्यज्य तेन मर्त्यत्वं शैवीं तनुमवाप्स्यथ॥
ततः प्रसन्नो भगवान् शङ्करो लोकशङ्करः।
भवतां दृश्यतामेत्य कैवल्यं वः प्रदास्यतीत्यादिकं॥

तत्र विपक्षशूल इदमुवाच तैत्तिरीये नारायणोपनिषदि कद्रुद्राय प्रचेतसे मीढुष्टमाय तवसे वोचेम शंतमं हृदे सर्व्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु, पुरुषो वै रुद्रः सन्महो नमो नमः विश्वं भूतं भवनं चित्रं बहुधा जातं जायमानञ्च यत्, सर्व्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु इत्यादिना रुद्रस्य सर्व्वात्मकत्व

---

१ महापापौघमाशाख्यः। तै. पु.। महापापौघपापोऽपि।
स. प.।

सर्व्वान्तर्यामित्वं सर्व्वोत्कृष्टत्वञ्च (१) घटते यच सदात्मब्रह्म-पुरुष-(२)-साधारणवचनात्मकसूक्तानि वर्त्तन्ते तानि सर्व्वाणि शिवपराण्येव। ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मेऽस्तु सदाशिवोमित्यादिना तस्य सर्व्वाधिपतित्वनियमात्। रुद्राक्ष-नार्च्चनादिना धर्म्मादिपुरुषार्थस्य विद्यमानत्वात्। नच रुद्राक्ष-धारणादिकं अयुक्तमिति भ्रमितव्यं (३)। कैवल्योपनिषदि हरोपासनामुपदिशति।

हृत्पुण्डरीकं विरजं विशुद्धं
विचिन्त्य मध्ये विशदं विशोकं।
अचिन्त्यमव्यक्तमनन्तरूपं
शिवं प्रशान्तममृतं ब्रह्मयोनिं॥
तदादिमध्यान्तविहीनमेकं
विभुं चिदानन्दमरूपमद्भुतं।
उमासहायं परमेश्वरं प्रभुं
त्रिलोचनं नीलकण्ठं प्रशान्तं॥
ध्यात्वा विनिर्गच्छति भूतयोनिं
समस्तसाक्षिं तमसः परस्तात्।

---

१ सर्व्वोपास्यत्वञ्च। तै. पु.।

२ इत्यादिना रुद्रस्य सर्व्वात्मकत्वादिप्रतिपादनायैव यच सदात्मब्रह्मपुरुष इत्यादि। स. पु।

३ नच रुद्राक्षधारणादिकं अयुक्तमिति भवद्भिः केन हेतुना निवारितं। का. पु.। वा. प.। नचेति विरहिते समीचीनं।

स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट् ।
स एव विष्णुः स प्राणः स कालोऽग्निः स चन्द्रमाः ॥
स एव सर्व्वं यद्भूतं यच्च भव्यं सनातनं ।
ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये ॥

इत्यादिकैवल्योपनिषदा हृदयपुण्डरीकान्तर्वर्त्तिनः उमासहायस्य त्रिलोचनस्य नीलकण्ठस्य ब्रह्मादिसर्व्वदेवमयस्य ध्यानादपुनर्भूतयोनिं गच्छन्ति, मुक्त्यनन्तरं पुनर्योनिप्राप्तेरभावात् । एवञ्च महादेवस्येशानकष्टत्वात् उमासहायादिलक्षणान्वितस्य लयस्वामिनो रुद्रस्यैवोपासनया मोक्षः सिद्ध इति फलितार्थः श्रुतिमन्यथाकर्त्तुमशक्यत्वात्, उपासकस्य विभूत्यादिचिह्नं युक्तमेव । ब्राह्मणेनावश्यं विभूतिधारणं कर्त्तव्यमिति कालाग्निरुद्रोपनिषदि समाम्नातं, अथ कालाग्निरुद्रं भगवन्तं सनत्कुमारः पप्रच्छ ब्रूहि भगवन् त्रिपुण्ड्रविधिं सतत्त्वं किं द्रव्यं किं यत्स्थानं कति प्रमाणं का रेखाः के मन्त्राः का शक्तिः किं दैवतं कः कर्त्ता किं फलमिति च तं होवाच भगवान् कालाग्निरुद्रो यद्द्रव्यं तदाग्नेयं भस्म सद्योजातादिपञ्चब्रह्ममन्त्रैः परिगृह्य अग्निरिति भस्म इत्यनेनाभिमन्त्र्य मानस्तोक इति समुद्धृत्य जलेन संमिश्र्य मानो महान्तमित्यालोड्य त्र्यम्बकं त्र्यायुषमिति शिरोललाटवक्षःस्कन्धेषु त्र्यायुषैः त्र्यम्बकैः त्रिशक्तिभिस्तिर्य्यक्तिस्रो रेखाः प्रकुर्व्वीत व्रतमेतच्छाम्भवं सर्व्वेषु वेदेषु वेदवादिभिरुक्तं भवति तस्मात् तत्समाचरान्मुमुक्षुः न पुनर्भवाय धन सनत्कुमार प्रमाणमस्य त्रिपुण्ड्रधारणस्य त्रिविधा रेखा आललाटादाचक्षुरामूर्द्ध्नो

मध्यतः योऽस्य प्रथमा रेखा सा गार्हपत्यश्चकारो रजो भूर्लोक-स्वात्मा क्रियाशक्तिः ऋग्वेदः प्रातः सवनं महेश्वरो देवतेति याऽस्य द्वितीया रेखा सा दक्षिणाग्निः उकारः सत्त्वमन्तरीक्ष-मन्तरात्मेच्छाशक्तिः यजुर्वेदः माध्यं दिनं सवनं सदाशिवो देवतेति याऽस्य तृतीया रेखा साहवनीयो मकारस्तमो द्यौर्लोकः पर-मात्मा ज्ञानशक्तिः सामवेदस्तृतीयं सवनं शिवो देवतेति त्रि-पुण्ड्रं भस्मना करोति यो विद्वान् ब्रह्मचारी गृही वानप्रस्थो यतिर्वा स समस्तमहापातकोपपातकेभ्यः पूतो भवति स सर्व्वेषु तीर्थेषु स्नातो भवति स सर्व्वान् देवान् ध्यातो भवति स सर्व्वान् वेदान् अधीतो भवति स सततं सकलरुद्रमन्त्रजापी भवति स सकलभोगभुग्देहं त्यक्त्वा शिवसायुज्यमाप्नोति न स पुनरावर्त्तते न स पुनरावर्त्तते इति यः शृणोत्यधीते वा सोऽप्येवमेव भवतीत्यन्तं सत्यमों सत्यमित्युपनिषदित्यस्यां छान्दोग्यो-पनिषदि त्रिपुण्ड्रस्य सर्व्वदेववेदकालात्मकत्वं मोक्षप्रदत्वञ्च प्रतिपादितं ( सुगमत्वान्न व्याख्यातं ) अतो विभूतिधारण-महिमानं वक्तुं न शक्यते केनापि, तस्मात् ब्रह्मचर्य्यादिभिरा-श्रमिभिः सर्व्वैरपि त्रिपुण्ड्रधारणमेवावश्यं कर्त्तव्यं। एवं रुद्राक्षलिङ्गधारणस्यापि प्रमाणसद्भावोऽस्त्येव।

शीर्षे कण्ठे कर्णयोश्च बाह्वो रुद्राक्षधारणात्।
नीलकण्ठो भवेन्मर्त्यो ब्राह्मणस्तु परात्परः॥

इति अगस्त्यसंहितायामुक्तं। अतस्तन्नूनं तदा मोक्ष अमृत इत्यादिप्रमाणेन तप्ततनोरेव फलश्रवणाल्लिङ्गाङ्कनमवश्यं कर्त्त-

थमिति प्राप्ते श्रीशङ्कराचार्य्यैरिदमुच्यते, तप्तलिङ्गादिधारणं द्विजातिभिर्न कर्त्तव्यम् प्रमाणाभावात्, अतप्ततनूरित्यादि-श्रुतेरर्थस्तावदेवं वक्तव्यं नाग्निना तापो विवक्षितः किन्तु तपसैव, ब्राह्मणस्य तपः कृच्छ्रचान्द्रायणादिकं तादृशेन तपसा तापो निर्दिष्टः कृच्छ्रचान्द्रायणैः कृश इति उक्तत्वात् (१) आर्षविरोधाच्च। तदुक्तं वृहन्नारदीये।

लिङ्गाङ्कितत‌नुं दृष्ट्वा राजन् चक्राङ्कितन्तथा।
स्नानमेव तदा कार्य्यमथवा सूर्य्यमीक्षयेत्॥
पतितं तप्तलिङ्गाढ्यं चक्राङ्कितमथापि वा।
वाङ्मात्रेणापि नार्च्चेत पाषण्डाचारतत्परम्॥
शूद्रवत्स परित्याज्यो जीवञ्छवसमाकृतिः।
तस्मै दत्तञ्च हव्यञ्च कव्यञ्चापि वृथा भवेत्॥
तद्दर्शनात् परित्याज्यमन्नं मन्त्राभिमन्त्रितं।
अपि शूद्रेणाद्भुक्तं तु लिङ्गचक्राङ्कितं विना॥
अपि चेन्निगमाचाररतो वेदाङ्गतत्परः। (२)
लिङ्गचक्राङ्कमात्रेण स सद्यः पतितो भवेत्॥

मार्कण्डेय पुराणे।

ब्राह्मणानाञ्च गायत्र्याः सम्वादोऽभून्महान्पुरा।
अतस्तयाऽतिसंशप्ताः पाषण्डास्तेऽन्यदेवताः॥
वेदोक्तकर्म्महीनाश्च तान्त्रिकाचारतत्पराः।

---

१ कृशत्वात् आर्षविरोधाच्च। तै. पु.।
२ वेदान्ततत्परः। का. पु.। तै. पु.।

यूयं कलौ भवन्त्वेवमिति तानाह सा रुषा ॥
अतः कलियुगे प्राप्ते भविष्यन्ति द्विजाधमाः।
वेदार्थहीनाः पाषण्डा लिङ्गचक्रादिचिन्हिताः ॥
ज्ञानकर्मपथाद्भ्रष्टाः कामक्रोधादिपीड़िताः।
दुरात्मानः सत्यधर्मवर्जिताः शापभोगिनः ॥
कलौ त्रिंशत्सहस्राब्दे पूर्णे नष्टा भवन्ति ते ॥
निःशेषतां गताः पश्चाद्द्वैतार्थानुचिन्तकाः।
सत्यधर्मपरा भूयो भविष्यन्ति न संशय ॥ इति।

तस्मादङ्कनं न युक्तं। भवदुक्तोपनिषत्तात्पर्य्यन्तु सत्यज्ञानमनन्तं ब्रह्म यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सहेत्यादिना तस्य दुराराध्यत्वादुमासहयादिधर्मसंयुतस्य रुद्रस्यैवोपासनयाऽपि मोक्षोऽस्त्येव तस्य परब्रह्मावतारत्वात् तत्प्रीतये विभूतिरुद्राक्षधारणमवश्यं कर्त्तव्यमेव। किन्तु लिङ्गत्रिशूलडमरुधारणं निर्मूलत्वान्नाङ्गीकर्त्तव्यमिति सिद्धान्तः।

एवं परिहृतयोः शैवमतैकदेशिनोः पुनरन्यः शाखान्तरेण प्रत्यवतिष्ठते भक्तायगणः इति। तेषामसुराणां तिस्रः पुर आसन्नयस्मय्यथ रजताऽथ हरिणी ता देवा जेतुं नाशक्नुवन् ता उपसदैव जिगीषं तस्मादाहुः यश्चैवं वेद यश्च नोपसदा वै महापुरं जयन्तीति इषुं संस्कृत्य अग्निमनीषं सोमं शल्यं विष्णु तेजनं तेऽब्रुवन् क इमामाशिष्यतीति रुद्र इत्यब्रुवन् रुद्रो वै क्रूरः सो स्यत्विति सोऽब्रवीत् वरं वृणे अहमेव पशूनामधिपतिरसानीति तस्माद्रुद्रः पशूनामधिपतिस्तां रुद्रो वासृजत तिस्रः पुरः

त्रिभ्यो लोकेभ्योऽसुरान् प्राणुदत यदुपसद उपसद्यन्ते भ्रातृव्य-पराणुत्त्यै नान्यामाहुतिं पुरस्ताज्जुहुयादिति। पुरा राक्षसानां मध्ये तिस्रः पुर आसन् अयोमयं रजतमयं हिरण्मयञ्च पुरनामकान् त्रीन् राक्षसान् जेतुं देवा अप्यसमर्था बभूवुः, ततस्ते देवा इषुं संस्कुर्व्वन्तः कल्पयामासुः त्रिदेवात्मिकामिषुं संस्कुर्व्वन्तः मूले अग्नि-देवात्मिकां मध्ये चन्द्रदेवात्मिकां अग्रे विष्णुदेवात्मिकामित्यर्थः, ततस्ते देवा अब्रुवन् क इमामस्यिष्यति क एनान्धारयति यतो अग्नीषोमविष्णुतेजःकूटात्मकत्वेनात्यन्तभारत्वात् जगत्त्रय-तेजोरूपत्वाच्च। एतादृक् पुरुषः स्वहस्तेन धृत्वा को वा प्रयुन-क्तीति विचार्य्य रुद्र इत्येवमब्रुवन् यतो रुद्रः क्रूरः किल वै अत एनां धर्त्तुं स एव समर्थः, यतो रुद्रस्याग्न्यादितेजः सर्व्वं स्वकी यमेतत्। कथमित्युक्ते तावदग्निचन्द्रौ भगवतो नेत्रे विष्णुस्तु तदीयदेहात्सात्विकांशात्सम्भूतः अतः स्वतेजस्तस्य भारो न भव-तीति रुद्रं प्रार्थयामासुः। सोऽब्रवीद्वरं वृणै भवद्भ्यः ब्रह्मादि-भ्यो वरमिच्छामीत्यर्थः किमिति अहमेव पशूनामधिपतिः प्रधान इति, एवं रुद्रेणोक्ता अब्रुवन्, तस्माद्रुद्रः पशूनाम-धिपतिः प्रधान इति रुद्रेणोक्ता अब्रुवन् तस्मात् रुद्रः पशूनामधिपतिरिति वयं ब्रह्मादयः सर्व्वे देवाः पशवः अस्माकं त्वमेक एव पतिरित्युक्त्वा तदीयलिङ्गत्रिशूलादिचिह्ना-नि सर्व्वे धारयामासुः। पशूनां ब्रह्मादीनां पतिः स्वामी पशु-पतिः तस्मै नमो नम इति नमकेऽपि प्रतिपादितत्वात्। तस्मात् ब्रह्मनारायणादिभिः सर्व्वैरुपास्यः स्वामीत्यर्थः। अतः सर्व्वै

देवा लिङ्गत्रिशूलमुद्राधारिणः विभूतिरुद्राक्षालङ्कृतदेहिनः शुद्धस्फटिकाक्षमालिकाबद्धकराः पञ्चाक्षरीमन्त्रराजोच्चारणचलदधरोष्ठाः ईषन्नतशिरस्काः परमेश्वरपादारविन्दयुगलं निजकिरीटैरर्चयन्तः भक्ताग्रगण्या बभूवुः। अतो निजलिङ्गत्रिशूलविभूतिरुद्राक्षधारणपरान् ब्रह्मादीन् प्रमथोत्कृष्टभक्तान्दृष्ट्वा तद्रक्षणाय पुरभिक्षणाय च मेरुगिरिं धनुः ज्यामहिराजं भूमिं रथं चन्द्रसूर्यात्मकं चक्रद्वयं वेदानश्वान् ब्रह्माणं सारथिञ्च कृत्वा वन्द्यादिभिरिव देवैः संस्तूयमानः परमेश्वरः (इत्यादि पुष्पदन्तोक्तप्रकारेण ) तामिषुमसृजत पुरोपरि मुमोच सेषुः पुराणि छित्वा मृत्युञ्जयस्य निषङ्गान्तरं प्राप तस्मात् पुरहरस्य लिङ्गादिचिह्नानि देवैरपि धृतानि तेषां मुख्यतया शिवभक्तत्वात् पशुत्वाच्च पशुपतिचिह्नधारणं युक्तमेव लोके सेव्यसेवकयोस्तथादर्शनाच्च तस्मात् शिवभक्तैरस्माभिश्च तदङ्कधारणमवश्यमङ्गीकर्त्तव्यमेवेति प्राप्ते शाङ्कराचार्य्याः, त्रिपुरसंहारकाले रुद्रभक्तानामपि देवानां लिङ्गाद्यङ्कनमनुपपन्नं कुतस्तथाविधप्रमाणाभावात् नारदादिमुनिषु च विभूतिरुद्राक्षस्फटिकधारणे विद्यमानेऽपि लिङ्गाङ्कनाभाव एव; तस्मादेव मुन्यादिषु कदाऽपि तप्तत्रिशूललिङ्गादिचिह्नं न विद्यते " श्रद्धाभक्तिध्यानयोगादवेहि " इति कैवल्योपनिषद्वचनाल्लिङ्गाद्यङ्कनस्य ज्ञानाङ्गत्वाभावात्। नान्यः पन्था विद्यते अयनाय इति मन्त्रैर्वेदमवाप्तव्यमित्यादिश्रुतेश्च मोक्षस्य ज्ञानसाध्यत्वमुपपन्नं तस्मान्निर्मलान्तःकरणप्राप्तस्य मोक्षस्य वह्नितापेन प्रयोजनाभावात

तस्मात्लिङ्गादेर्निन्दादर्शनाच्च लिङ्गाङ्कनमयुक्तमेवेति सिद्धं। भवन्मते ऽपि देवाग्रगण्यस्य शिवस्य च अंशांशिभावत्वेन तथापि तदङ्कनं व्यर्थमेव तयोर्भेदाभावात्, यदि राजाङ्कनं भृत्यस्येत्युक्तं तदप्यसत्यं राज्ञः एकच्छत्रादिचिह्नं वर्त्तते तद्भृत्यस्य नास्त्येव। त्रिशूला-द्यायुधविशेषं देवो बिभर्त्ति भक्तेनापि तथायुधधारणं कर्त्तव्यमि-ति किल भवद्भिरुक्तं, तथा चेदयोमयं त्रिशूलादिकं धारयतां भारमात्रमेव प्रयोजनं भवत्यत् नास्त्येव तथाविधकार्य्यकारणता-यां। किञ्च नीलकण्ठभुजगभूषणादिचिह्नं देवस्यास्ति तदपि धारय, वृश्चिकादिविषमात्रेण म्रियमाणस्य मर्त्यस्य न कालकूट-भक्षणे शक्तिरस्ति रज्जुदर्शनेन सर्पभ्रान्त्या पलायमानस्य भुजग-भूषणता कथं युज्यते। तस्मात् पामरबुद्धिं विहाय लिङ्गाद्य-ङ्कनं परित्यज्य वेदोक्तकर्म्मसमर्पणं भगवति कृत्वा जीवेशयो-रैक्यांशसन्धानं कुर्व्वन् वर्त्तयन् दृढे तज्ज्ञाने जन्ममरण-प्रवाहकारणमूलाज्ञाननिवृत्तौ जातायां लिङ्गशरीरभङ्ग-द्वारा मुक्तो भवसीति परमाज्ञापितः भक्ताग्रगण्यस्तदनुया-यिनश्च परमनकालानलादयः परमगुरुं श्रीशङ्कराचार्य्यं नत्वा स्वबन्धुपुत्रमित्रादिभिः सह त्यक्तलिङ्गाङ्काः सम्यगुपदिष्टशुद्धाद्वैत-वादिनो बभूवुः। इत्यनन्तानन्दगिरिकृतौ शिवमतैकदेश-निवर्हणं नाम पञ्चमं प्रकरणं॥ * ॥

तस्मादनन्तशयनं (१) नाम भगवद्धामूर्त्तिसङ्घटित-प्रदेशं संप्राप्तः तद्देवदर्शनं कृत्वा निजशिष्यैर्मासपर्य्यन्तमास तत्र, भक्ता भागवताश्चैव वैष्णवाः पाञ्चरात्रिणः। (२)

वैखानसाः कर्म्महीनाः षड्विधा वैष्णवा मताः॥

क्रियाज्ञानविभेदेन त एव द्वादशाभवन्।

तानाह शङ्कराचार्य्यः किं वो लक्षणमुच्यतां॥

आदौ भक्ता इदमूचुः। स्वामिन् वासुदेवः परमपुरुषः सर्व्वदा जगदवनपरः सर्व्वज्ञः सर्व्वदेवकारणः स एव रामकृष्णाद्यवतारविभेदेन भूभारं निवर्त्तयितुं शिष्टावनमशिष्टसंहारं च कुर्व्वन् पुण्यस्थलेषु निजाविर्भूतमूर्त्तिप्रतिष्ठामाचकार। मूढा वयं किल तदीयपादपङ्कजसेवया विगतपापास्तच्छोकवासं प्राप्स्याम इति निश्चयबुद्ध्या कौण्डिन्यमुनेः प्रसन्नो विष्णुरनन्तनाम्ना शिलाचैव वर्त्तते, तदीयचरणसेवनमनुदिनं कृत्वा तीर्थप्रसादादिभिस्तृप्तिमेत्य गोपुरप्राकारादिषु सम्मार्जनप्रोक्षणादिकं कुर्व्वन्तः सन्तो वसामः।

शङ्खेन रहितानेतान् स्मार्त्तवंशसमुद्भवान्।

ऊर्द्ध्वपुण्ड्रपरान् भक्ताननन्तास्त्रिदशे नयेत्॥ (३)

---

१ रामेश्वरादनन्तशयनं। का. पु.। तै. पु.।

२ वैष्णवाचारचक्रिणः। वा. पु.।

३ भवेत्। का. पु.। स. पु.। सै. पु.।

ध्यानमूलमिदं ब्राह्मनित्याचाह्निकचोदिता ॥

नित्यकर्म्मण्यप्रामाण्यमिव प्रतिफलति वः किमप्रामाण्यमिति यतिवर्य्य मदीयाचारो द्विविधः (१) ज्ञानक्रियाभेदात्। ज्ञानिनो वयं विष्णुशर्म्मादयः परे कर्म्मठाः ब्रह्मगुप्तादयः श्रीमदनन्तभक्ताः अत्रैव वर्त्तन्त इति विष्णुशर्म्मवचनं निशम्य शङ्कराचार्य्यस्तमपृच्छत् भवत्प्रमुखा ज्ञानिनः किल ज्ञानस्य वा लक्षणं तेन फलमपि किमित्युक्ते विष्णुशर्म्माह, श्रीमदनन्तभगवत्पादकमलमेव शरणमिति तूष्णीमवस्थितिरेव ज्ञानं तदनुज्ञां विना इच्छाचलनमपि न भवतीति, तमाचार्य्योऽब्रवीत् मूढ़ विष्णुशर्म्मन्।

"जन्मना जायते शूद्रः कर्म्मणा जायते द्विजः।"

इत्याश्रमधर्म्मानुकूलं कर्म सर्व्वेषामलङ्घ्यं तस्यैव तपःशब्दवाच्यत्वात्, सन्यासिनामपि विहितं कर्म कर्त्तव्यमेव "कर्म्महीने तु पातित्यमिति दर्शनात् "अहरहः सन्ध्यामुपासीत, उदिते सूर्य्ये प्रातर्जुहोति, उद्यन्तमस्तं यन्तमादित्यमभिध्यायन् कुर्वन् ब्राह्मणो विद्वान् सकलं भद्रमश्नुतेऽसावादित्यो ब्रह्मेति ब्रह्मैव सद्ब्रह्माप्येति य एवं वेद" इति च, सर्व्वे वेदा ब्राह्मणोचितं नित्यकर्म्म प्रशंसन्ति श्रौतस्मार्त्तादिकं, यतः कर्म्मार्थमेव श्रुतिप्रवृत्तिः, अतः सर्व्वैराश्रमिभिः वेदोक्तं कर्म्म अवश्यं कर्त्तव्यमेव।

---

१ नित्यकर्म्मप्रामाण्यमिव वः प्रामाण्यं किं न प्रतिफलति। स. पु.। नित्यकर्म्मप्रामाण्यमिव प्रतिफलति वः किमप्रामाण्यं। तै. पु.। का. पु.।

जीवन् कर्म्मपरित्यागं यः करोति नराधमः।
स मूढो नरकं याति यावदाभूतसंप्लवं॥

इति मनुवचनदर्शनात् देवार्चनध्यानभिक्षाचर्य्यादिकं कर्म यतीनाञ्च विद्यत एव। शौचाचमनस्नानसन्ध्यावन्दन-जपाग्निहोत्रस्वाध्यायमाध्याह्निकदेवातिथिपूजादिकं कर्म वान-प्रस्थगृहस्थयोस्तुल्यमेव, वनस्थस्य न किल विशेषः, तयो नानशनात्परमिति, ब्रह्मचारिणस्तु स्नानसन्ध्यास्वाध्या-येश्वरपूजागुरुकुलवासादिकं कर्म उचितं अतः स्वकर्म-भ्रष्टानां भवतां आत्मप्रत्यवायहानिप्रसक्तिः स्यात्। किञ्च ज्ञानमार्ग-वर्त्तिनो वयमिति भवद्भिरुक्तं तत्राप्यधिकारो नास्त्येव, यद्यस्ति तर्हि मदग्रतश्च ब्रह्मनाड़ीविभेदकं चित्परामर्शभावं षट्चक्र-मार्गं दर्शयध्वं (१), एवमाचार्य्यैरुक्ते विष्णुशर्म्मादयः इदमूचुः, यतिनाथ अत्र कर्म्म ज्ञानं चोभयमेवास्माभिर्व्विदितं त्रिकाल-मनन्तदेवपाददर्शनं विना न किञ्चिदिति (२), तद्वचः श्रुत्वा सम्भूताश्चर्य्यः (३) श्रीशङ्कराचार्य्य इदमाह, विष्णु-शर्म्मन् कतिपयैरब्दैरेवं स्थितिः। स त्वाह, मत्सहशः सप्तमः पुरुषः तत्पिता किञ्चित्कर्म्मशील इति वाक्ये मया श्रुतं। तद्वि-

१ षट्चक्र मार्गयध्वं। का. पु.।

२ अस्माभिर्न विदितं त्रिकालमनन्तदेवपाददर्शनं विना। का. पु.। अस्माभिर्विदितमित्यादि न किञ्चिदितीति विरचितं पाठान्तरं। स. पु.।

३ तद्वचोगुम्फनेन समन्ताद्भूताश्चर्य्यः। का. प.।

शम्य कोपाश्रुवर्षोभयाक्रान्तमानसः सकलगुरुराह हे शाल्य सकल धर्म्मवहिष्कृत दूरात्गच्छेति त्वत्संसर्गेणास्माकं दोषो भवेदिति विष्णुशर्म्माणमकारीत्। स तु क्षीणपरितमानसः सगणः ममत्तापराधं चमस्वेति दण्डवत्प्रणम्य सम्पुटितकरद्वयः स्थाणुवत्समातिष्ठत। विष्णुशर्म्माभिधमेनं शरणागतं दुर्मार्गाद्रचामो वयमिति धिया सगणस्य तस्य प्रायश्चित्तकरणे हस्तामलकादीन्निजशिष्यानाज्ञापयामास। ते विष्णुशर्म्मप्रमुखानां स्नानब्रह्मदण्डसमर्पणमुण्डनसहस्रघटस्नानशतप्राजापत्यकृच्छ्रप्राच्योदीच्याङ्गगोदानभूशयन-( १ )-गोगर्भजननजातकर्म्मनामकरणचौलोपनयनविवाहप्रमुखकर्माणि यथाविधि समाचरन्त। विष्णुशर्म्मादयोऽपि विहितब्राह्मणानुष्ठानतत्पराः श्रीपरमगुरुमिदमूचुः। स्वामिन् भवत्कृपया ब्राह्मण्यसिद्धिरासीत्। मोक्षसिद्धिः केनोपायेन नो भविष्यतीति जल्पन्तं विष्णुशर्म्माणमिदमब्रवीत्।

ब्राह्मणाचारदेवाः स्युरीशो विष्णुर्दिनेश्वरः।
उमा गणपतिश्चैव तेषां पूजापरा नराः॥
ब्रह्मार्पणधिया कामान् परित्यज्याचरन्ति ते।
एवं कृते नित्यकर्म्मण्यमले मनसि प्रभो॥
जीवस्य च भिदाभावो भात्येव न संशयः।
मूलाज्ञानस्य तत्तस्य निवृत्तिर्ज्ञानकारणं॥ ( २ )

---

१ आज्यशयन। वा. पु.।

२ मूलाज्ञानस्य निवृत्तिज्ञानस्य कारणं मतं। का. पु.। स पु.। तै. पु.।

तेन भग्ने लिङ्गदेहे मुक्तिर्भवति नान्यथा।
इत्यादिष्टो विष्णुशर्मा दण्डवत्प्रणिपत्य तं॥
सगणः कारयामास नित्यकर्म गुरुं स्मरन्।
स्मार्त्ताचारपरिश्रान्तः पञ्चपूजाविशारदः॥
त्रिपुण्ड्रं भस्मना कुर्व्वन् चन्दनेन च सुव्रतः।
स्नात्वा मृत्तिकया चोर्द्ध्वपुण्ड्रं कुर्व्वन् प्रयत्नतः॥

एवं निराकृतेषु विष्णुशर्मादिभक्तेषु तदन्ये कर्माश्रित-भक्ताः ब्रह्मगुप्तादयः समागत्य मुनीन्द्रमिदमूचुः। स्वामिन् स्मार्त्तमार्गेण स्नानादिकर्म कुर्व्वन्तो वयमपि कर्मफलं भगवत्पादार्पणं कृत्वा निवसामः, इति ब्रह्मगुप्तकृष्णदासकमलाभक्तादिभिर्विज्ञापितः श्रीशङ्कराचार्य्यः तान् प्रहसन्निदमुवाच इतः परं पञ्चपूजाफलपरिलब्धचित्तशुद्धयः शुद्धाद्वैतविद्याविषयनिराकृतमायारचितभेदवासनाः यूयं स्वात्मानन्दानुभवत्यक्तलिङ्गशरीराः सच्चिदानन्दैक्यफलमनुभविष्यथेति गुरुवाक्यं श्रुत्वा नत्वा स्वस्था बभूवुः। एवं भक्तमते निराकृते भागवतमतावलम्बी कश्चिद्विप्रदेवः प्रत्यवतिष्ठते मन्त्रवर्णात्।

सर्ववेदेषु यत्पुण्यं सर्वतीर्थेषु यत्फलम्।
तत्फलं समवाप्नोति नत्वा देवं जनार्दनम्॥

अनेन मन्त्रेण जगत्पतिस्तोत्रमात्रेणैव वेदपारायणतीर्थयात्रादिपरिलब्धफलस्य सत्वात्। श्रियःपतिकीर्त्तनमनुदिनमाचरन् वसामि 'कलौ संकीर्त्य केशवं' इति वचनात् मुक्तिः करस्थैव तस्मान्मन्मतस्य निगमोक्तत्वात् प्रामाण्यं स्मृत्याचारानुकूल-

लक्षणत्वात् स्मार्त्तं स्नानादिसत्कर्म तद्युक्तोऽपि भगवत्स-
म्बन्धिभागवतः श्रियःपतिकटाक्षादृष्टमभवं नास्मिन्विचारः
कर्त्तव्यः सुवर्णस्य परिमलप्राप्तिरिव शङ्खाख्यस्य विष्णुस्तुतिः
किल, तस्मात् श्रीमन्नारायणभक्त्या चोर्द्धपुण्ड्र शङ्खचक्रगदापद्मा-
दिचिह्नितस्तुलसीमालिकाबद्धगलः सार्व्वकालिकमुच्चैः नितरां
स्तौमि नारायणमेव शरणमिति वदन्नमाचार्य्योऽब्रवीत्, भाग-
वत भवन्मतमसमञ्जसं विरोधसद्भावात् कथं चक्राद्यङ्कनस्य
निन्दादर्शनात्। किञ्च भगवतो मूर्त्तिश्चतुर्द्धा भवति परव्यूह
विभवार्चाभेदात्। परमूर्त्तेः स्वरूपाभावाल्लिङ्गाभावः आकाश
शरीरं ब्रह्मेति यच्चुक्तं तद्ब्रह्म कं ब्रह्म खं ब्रह्मेत्यादि श्रुति-
भ्यः, तद्रूपं वक्तुं वेदा अपि असमर्था एव यतो वाचो निव-
र्त्तन्ते अप्राप्य मनसा सहेत्यादि श्रुतिभ्यः, अतो मनोवाग्वृत्त्य-
गोचरं ब्रह्मेत्यर्थः, तदेव परमूर्त्तिः। व्यूहमूर्त्तिर्विराट् चतु-
र्द्दशलोकात्मकः तस्य ब्रह्माण्डकर्परपर्य्यन्तमाकाशः शिरः,
चन्द्रसूर्य्यौ नेत्रे, प्रागादिदिशः श्रोत्रे, अन्तरीक्षलोको घ्राणं,
मेरुः पृष्ठवंशः, शिखरत्रयं भुजकण्ठाः, प्रत्यन्तपर्वताः पृष्ठपार्श्व-
वक्षांसि, उपपर्वताः शाल्मल्यादीनि, समुद्रा रक्तं, लता स्नायूनि,
तृणवृक्षाः रोमाणि, भूमिः कुक्षिः द्वीपा वलयः, भूरेखा रोम-
राजिः, भूमध्यप्रदेशो वस्तिः, मेरुः शिश्नं, दिग्दन्तिपङ्क्तिर्नित-
म्बोरुभागः, अतलादिसप्तकं कटिपादान्तरालः, कूर्म्मः पादौ,
एवं वर्त्तमानस्य विराड्देहस्याङ्केन तप्तमुद्राधारणं समर्थये-
त्क्व ह। शीर्षादिपादपर्य्यन्तं चिह्नेन केनचिद्योमयेन दृढ़

-तप्तेन शरीरमङ्कय इत्यनाशात्परं वैष्णवसिद्धिर्भविष्यति। विभवमूर्त्तयः मत्स्याद्याः चेतने मत्स्याद्यवतारात्मके नारायणे विद्यमाने अचेतनयोः शङ्खचक्रयोश्चिह्नं किमर्थं कर्त्तव्यं। चेतनपरित्यागे अचेतनपरिग्रहणे मानाभावाद्दोषबाहुल्यस्य बृहन्नारदीये उक्तत्वाच्च। अपि लोहमये आयुधरूपे शङ्खचक्रगदापद्मसहिते विहाय लोहमयान्येव मत्स्याद्याकाराणि कृत्वा तैरेव चिह्नधारणं कुरु तेन चर्म्मक्लेशमात्रं फलमस्ति। तथा कृतं चेत् प्राणा न स्थीयन्त इति इति चेत् चक्रादि लोहमयं कृत्वा विष्णुमेव हस्ताभ्यां धारय बाहुभारमात्रं फलमस्ति। अर्च्चामूर्त्तीनां शिलामयत्वात् तद्रूपेण तप्तेन बाऽङ्कय। तस्मान्मूढ भगवच्चिह्नधारणं कर्त्तव्यमिति पाषण्डबुद्धिं त्यक्त्वा स्वकर्म्म नित्यादि यथाशक्त्या कृत्वा तत्फलसमर्पणं भगवत्येव विधाय शुद्धाद्वैतवादिनं गुरुमाश्रित्य तदुपदेशवशाद्विनष्टकर्म्मबन्धः मुक्तो भविष्यसि। किञ्च स्तुतिमात्रेणैव मुक्तिः करस्थेति भवद्भिरुक्तं तदत्यन्तासम्बद्धं ब्रह्मणो वागतीतत्वेन स्तुतेर्वाग्रूपत्वेन मुक्तिः सुतरामयुक्तैव ज्ञानं विना मुक्तिर्नास्त्येव नान्यः पन्था विद्यते अयनायेति निषेधदर्शनात्। यद्वाचाऽनभ्युदितं येन वागभ्युद्यते तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते यन्मनसा न मनुते येनाहुर्मनोमतं तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत इत्यादि श्रुतिभ्यः ब्रह्मणो वाङ्मनसोरत्यतीतत्वात् ईदृक् स्वरूपं ब्रह्मेति वक्तुमशक्यत्वात् तदीयध्यानादिकं सर्व्वदा अनुपपन्नं। जन्मान्तरबहुलाभ्यासपरिपक्वबुद्धेः कस्यचित् गुरूपदेशवशात् अवगत-

ब्रह्मतत्त्वस्य मुक्तिर्भवति। आश्चर्य्यो वक्ता कुशलोऽस्य लब्धा ह्याश्चर्य्यो ज्ञाता कुशलानुशिष्टः, न नरेणावरेण प्रोक्त एष नु सुविज्ञेयो बहुधा चिन्त्यमान इत्यादि कठश्रुतिभ्यः। ब्रह्मबोधस्यासाध्यत्वात् ब्राह्मणेन कर्म्मनिष्ठावता भवितव्यं तदनुष्ठानेन चित्तशुद्धौ जातायां बहुजन्मतपःफलादाविर्भूतब्रह्मस्वरूपप्रपन्नः सन् मुक्तो भवति। उक्तञ्च भगवद्गीतासु।

बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यत। इति
वासुदेवः सर्व्वमिति स महात्मा सुदुर्लभः। इति।

यत्र ब्रह्मणि प्रपञ्चदृष्टिर्जायते (१) तदनन्तरज्ञानेन नेदं जगत् किन्त्वात्मैव जायते तदा स एवाहं भेदाभावो (२) भवत्येव, स एव मुक्तिरिति। एवमुपदेशं (३) कुर्व्वन्तं परमगुरुं श्रीशङ्कराचार्य्यं विप्रदेवः सम्यगभिवाद्य स्वामिन् मदीयमतेनालं तस्य मुक्तिजनकत्वाभावात् तावद्भवत्पाददर्शनं मम सुकृतशतेनैवाभूत्। अतः सदुपदेशेन मां कृतार्थं कुर्व्विति नमस्कारपुरःसरं विज्ञापितः श्रीपरमगुरुरिदमवादीत्, भो विप्रदेव चिह्नादिकं परित्यज्य यथाकालोचितं नित्यकर्म्म कुर्व्वन् सदहं ब्रह्मास्मीति भावय, सिद्धायां भावनायां मुक्तो भवसीति॥ इत्यनन्तानन्दगिरिकृतौ भागवतमतनिवर्हणं नाम षष्ठं प्रकरणम्॥ * ॥

---

१ प्रपञ्चदृष्टिर्जायते। बा. पु.।

२ तदात्मनासह भेदाभावो। बा. पु.।

३ एवं मुमुक्षुपदेशं। बा. पु.।

## सप्तमं प्रकरणं।

---

एवं भक्तभागवतमतयोः पुनरन्यो वैष्णवः शार्ङ्गपाणि रिति प्रत्यवतिष्ठते मन्त्रवर्णात्।

यमुक्त्वा मुच्यते योगी जन्मसंसारबन्धनात्।

ओँ। नमो नारायणायेति मन्त्रोपासकः स आह। भगवद्भक्तेन वैकुण्ठलोकवासार्थमवश्यं शङ्खचक्राद्यङ्कनं कर्त्तव्यं। नारायणमुद्रादिधरः (१) नारायणाष्टाक्षर्युच्चारणमात्रेणैव जन्मसंसारबन्धनादिमुक्तः वैकुण्ठभवनं गमिष्यति, शङ्खचक्राद्यङ्कितगात्रः वैष्णवोत्तम इति तादृग्विधास्तल्लोकवासिनो मुक्ता इति प्रसिद्धेः। तदुक्तं पुराणादौ।

ये बाहुमूलपरिचिह्नितशङ्खचक्रा
ये कण्ठलग्नतुलसीनलिनाक्षमालाः।
ये वा ललाटफलके लसदूर्ध्वपुण्ड्रा
स्ते वैष्णवा भुवनमाशु पवित्रयन्ति॥ इति

---

१ मन्त्रोपासकः वैकुण्ठभुवनं गमिष्यतीति। अतो नारायण मुद्रादिधरः। बा. पु.।

शङ्खचक्राद्यङ्कनस्य पुराणपठितत्वादवश्यं कर्त्तव्यमेव भगवच्चिह्नत्वात्। एवं प्राप्ते आचार्य्याः। नैव तप्तशङ्खचक्रधारणं परिहर्त्तव्यं कस्मात् तद्बोधकश्रुत्यभावात् (१)। अतप्ततनूर्न तदामो अश्नुत इति श्रुतिस्तत्र प्रमाणमिति चेन्न। तपस्तप्ततनुरेव ब्रह्मबोधस्यान्यत्र दर्शनात्। भृगुः ब्रह्मबोधार्थं पितरं वरुणमासाद्य यथोचितं नत्वा ब्रह्मोपदेशं कुर्वित्युक्ते तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्मेति किल वरुणेनोक्तं। तपःशब्दार्थस्तु महापातकध्वंसहेतुभूतकृच्छ्रचान्द्रायणादिः आश्रमविहितकर्मानुष्ठानं वा सकलवेदवचनविदितस्य साक्षिचैतन्यस्य सर्व्वदेवमयस्य ध्यानं वा भविष्यति।

एको देवः सर्व्वभूतेषु गूढः
सर्व्वव्यापी सर्व्वभूतान्तरात्मा।
कार्य्याध्यक्षः सर्व्वभूताधिवासः
साक्षी चेता केवलो निर्गुणश्च। इति।

अतः परमात्मनो रूपगुणकर्माभावाच्च तत्स्वरूपज्ञानेनैव मुक्तिदर्शनात्, तपोमूलमेव ब्रह्मज्ञानमिति प्राप्तं तस्मात् चक्रादिचिह्नस्यानवकाशः कार्य्यमर्त्ये विष्णोरस्त्राद्यायुधस्य विद्यमानत्वात्। तच्चिह्नधारणेन तन्मन्त्रजपेन च वैकुण्ठप्राप्तिरिति किलोक्तं नहि तदपि रमणीयं मेरोस्त्रयशृङ्गेषु त्रिषु वर्त्तमानेषु पश्चिमशृङ्गे रुद्रलोकः मध्यशृङ्गे ब्रह्म-

१ तद्बोधकश्रुत्यभावात्। स. पु.।

लोकः प्राकृग्रन्थे विष्णुलोकः तेषां ब्रह्मावसानलयात्मकत्वात्
तत्प्राप्तिरनर्थैव। तद्द्वारा चक्रादिधारणस्य निरर्थकत्वं प्राप्तं।
ब्रह्मविदाप्नोति परमिति ब्रह्मविद एव निःश्रेयसप्राप्तेः तद-
न्यतः क्षीणे पुण्ये मर्त्यलोकं विशन्तीति संसारप्राप्तिकरमेवेति
सिद्धं पुराणेषु वृहन्नारदीयादिषु तप्तचक्रलिङ्गनिषेधदर्शनात्
कर्म्मवाह्यस्य ब्राह्मणव्यतिरिक्तस्य तद्विक्रमस्तु तस्याप्यपजयश्रू-
यथैव मुक्तिदर्शनादप्रयोजकत्वं चक्राद्यङ्कनस्य प्राप्तं। विष्णु-
चिह्नधारणेन विष्णुसमोऽहं भविष्यामीति फलधिया
चेदङ्कधारणमात्रेणैव विष्णुत्वप्राप्तिः शूद्रस्य स्त्रियाश्च यज्ञो-
पवीतधारणमात्रेण ब्राह्मण्यप्राप्तिरिव भाति ब्रह्मभावन-
यैव ब्रह्मत्वप्राप्तेः ब्रह्मविद ब्रह्मैव भवतीति श्रुतेः। किञ्च अ।
अत्ता चराचरग्रहणादित्यस्याधिकरणस्यास्य विषयवाक्य-
मेतत्। यस्य ब्रह्म च क्षत्रञ्चोभे भवत ओदनं मृत्युर्यस्योप-
सेचनं क इत्था वेद यत्र स इति अस्मिन्नधिकरणे मया भाष्ये
सिद्धान्त एवं कृतः, अत्ता परमात्मा कस्मात् चराचरग्रहणात्
यस्य च ब्रह्मक्षत्राद्युपलक्षितं जगत् चराचरं ओदनमन्नं मृत्युः
सर्व्वप्राणिप्राणहर्त्ता उपसेचनं उपदंशः इत्थं को वा वेद यत्र
यस्मिन् अस्तीत्यर्थः। वेदितुः फलमाह स एव परमात्मैव
भवतीति तस्मात् ब्रह्मप्राप्तिः निरुपाधिकब्रह्मवेदनेनैव भवति।
सर्व्वेषां देवानामात्मैकायनमिति वृहदारण्यकश्रुतेः। सर्व्व-
देवस्वरूपोऽपि सन्मामन एवेति चेन्न। कथं कर्म्मातीतस्ये-
श्वरस्य कर्म्मगोचरत्वं ब्रह्मत्वे देवानां पृथक्स्वरूपाभावात्

कारणैक्यं सिद्धमेव (१)। अतः एकायनं मुख्यस्थानं। स्वष्टुर्मायान्तर्गतस्य वचनं बहु स्यां प्रजायेयेत्यनेन सर्व्वदेवमयत्वं प्राप्तं देवानां तदंशसम्भूतत्वात् (२)। अतो यस्य देवस्य उपासनामविच्छिन्नां करोति तल्लोकप्राप्तिमात्रमेव फलं समधिगच्छति पुण्यक्षये पुनर्मर्त्यलोकप्राप्तेः। तदनन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्यामित्यस्मिन्नधिकरणे जीवस्य तृणजलौकान्यायेन परलोकगमनमुक्त्वा (३) तत्र स्वकर्मसम्पादितफलमनुभूय किञ्चिदवशिष्टे निजकर्मणि पुनर्मर्त्यलोकप्राप्तये पञ्चाग्निविद्यामाश्रयति जीवः। स तु द्युपर्जन्यपृथिवीपुरुषयोषित्सु श्रद्धासोमवृष्ट्यन्नरेतोरूपाः पञ्चाहुतीरवलम्ब्य पुरुषाकारो भवतीति अतः संसारमार्गात् दृढतरज्ञानेन विना तप्तचक्रादिधारणेन नष्टो भवतीति अनृतवाद एव, सर्व्वस्य मायारूपत्वात् अमायिकसदनुसन्धानेनैव तन्निवृत्तिः (४)। अतः सर्व्वज्ञनित्यशुद्धबुद्धमुक्तस्वरूपं सत्यज्ञानमनन्तमणुमहत्त्वादिलक्षणलक्षितं ब्रह्मास्मीत्यनुसन्धानं सदा कुरु। तदनुसन्धानेन भेदगन्धे निरस्ते जीवस्य परमत्वमेव, उक्तञ्च शिवगीतासु।

---

१ कारणैक्यता सिद्धैव। तै. पु.।

२ तदंशभूतसम्भूतत्वात्। वा. पु.।

३ परलोकमुक्त्वा। वा. पु.।

४ अमायारूपत्वादमायिकसदनुसन्धानेनैव तन्निवृत्तिः। वा. पु.।

शिवः शिवोऽहमस्मीति वादिनं यञ्च कञ्चन।
आत्मना सह तादात्म्यभागिनं कुरुते भृशं। इति॥

एवमुपदिष्टः शार्ङ्गपाणिर्वैष्णवः श्रीशङ्कराचार्य्यं परम-गुरुं नत्वा स्वामिन् भवदुपदेशेन कृतार्थोऽस्मि। इतः परं शुद्धाद्वैतवृत्तौ सोऽहंभावनापरिलब्धफलनिरस्तभिदाशङ्कायां निश्चयेन वर्त्तेऽहमिति दण्डवन्ननाम। आचार्य्यस्त्वं मुक्तो भवेत्यवादीत। तदनन्तरं निरस्तचक्रः स्मार्त्ताचारपरिश्रान्तगात्रः पञ्चपूजानिपुणत्वप्रसक्तदेवदत्तवरः स्वकुलग्रामदेशस्थानशेषानियमाचकार। इत्यनन्तानन्दगिरिकृतौ वैष्णवमतनिवर्हणं नाम प्रकरणं सप्तमम्॥ * ॥

## अष्टमं प्रकरणं ।

एवं परिहृते वैष्णवमते पुनरन्यः पाञ्चरात्रागमदीक्षितः प्रत्यवतिष्ठते । स तु श्रीशङ्कराचार्य्यमिदमाह । स्वामिन् भवानत्रागत्य भक्तभागवतवैष्णवमतनिरसनं कृत्वा वर्त्तसे ते वैष्णवाः किमु जातिमात्रोपजीविनः पुण्ड्रादिधारणमात्रेण तद्दीक्षाः तन्मतं भवता निरस्तमेव इदानीमशेषविष्णुविदाचाकारणं पाञ्चरात्रं परमवैष्णवमतमहमवलम्ब्य चिरादनन्तदेवपादकमलाराधनं कुर्व्वन् भगवत्प्रियोऽभवं । पाञ्चरात्रागमस्य निन्दां कर्त्तुमसमर्थ एव ईश्वरोऽपि अतः भगवद्धामर्त्ति प्रतिष्ठादिकमपि तदनुष्ठानमूलकत्वात् कर्त्तव्यं। तस्मात् ब्राह्मणैः सर्व्वैरपि पाञ्चरात्रागमाचार एव कार्य्य इति प्राप्ते आचार्य्यैरिदमुच्यते । भो वैष्णव समीचीनमुक्तं भवता, विचार्य्यमाणे वेदाविरुद्धमागमेऽस्ति चेत् तदुक्ताचारः परिग्राह्यो भवति यदि विरुद्धस्तदा स एवाचारः परित्याज्यो भवति । प्रथमं विष्णुसम्बन्धी वैष्णवः विष्ण्वेकदेवतानिरत इत्यर्थः । तादृग्विधस्य वैष्णवस्य विष्णुसम्बन्धतोपदेशेनापि न ब्राह्मणभावः स्यात् ।

किन्तु गायत्र्युपदेशेनैव ब्राह्मण्यसिद्धिर्भवतीति। अतो मन्त्रान्तरपरिग्रहस्य दुर्निवार्य्यत्वात् ब्राह्मण्यानुग्रहाय गायत्र्यङ्गीकारः कर्त्तव्य आसीत् गायत्र्यङ्गीकारोऽपि माऽभूदिति यद्युच्यते तर्हि गायत्र्यभावे पतित एव स्यात्। तस्मान्मन्त्रान्तरसद्भावात् वैष्णवत्वहानिः स्यात्। किञ्चैवमेव रविरश्मिश्च सेवनीयः (१) तयोरपि ब्राह्मणकर्माधारत्वात्, तस्मादपरिहार्य्येषु देवतान्तरेषु सद्भावात् तत्परित्यागे ब्राह्मण्यविच्छित्तिदर्शनात् वैष्णवमतमनृततरमित्युक्ते स त्वब्रवीत्। भवदुक्तमसमञ्जसं कथं गायत्र्या अपि विष्णुशक्तित्वात्। तदपि कथं शङ्खचक्रधारणस्य विद्यमानत्वादत्र यत्र विष्णुचिह्नधारणत्वं युज्यते तत्र तत्तद्रूपत्वं प्राप्यते इति तर्हि रुद्रशक्तिरेवेति वक्तव्या, कथं पञ्चवदनेन्दुशेखरत्वाद्युपमानाद्रुद्रस्य प्रागादिमुखसद्भावो यथा तथैव गायत्र्या अपि चन्द्रमुकुटत्वं रुद्रस्यासाधारणो धर्मः। तद्वदस्याश्चेत्यतः गायत्री रुद्रशक्तिरेवेत्यविरुद्धं। किञ्च शरीरापेक्षया आयुधानां भिन्नत्वात् पञ्चवक्त्रसद्भावात् रुद्रशक्तिरस्तु वा न वेति सन्देहलेशाभावात् परमेश्वर्य्येव गायत्रीति निरवद्यं। स्वामिन् गायत्रीशब्दार्थस्तु न परमेश्वरीं रुद्रशक्तिं वक्ति किन्तु सवितुर्देवस्य वरेण्यं श्रेष्ठं भर्गः तेजः धीमहीत्यादिना सूर्य्यतेजःप्राधान्यात् तन्मण्डलालयस्य नारायणस्यैवेयं शक्तिरिति रोचते तस्या बहुरूपसद्भावात् पञ्चमुखादिकमविरुद्धं। ननु अष्टमूर्त्तेः परमेश्वरस्यैव शक्तिरीदृशी कथं सूर्य्यस्य

---

१ पूजनीयः। का. पु.। स. पु.। तै. पु.।

तन्मूर्त्तित्वात् अतो रुद्रमूर्त्तिप्रतिपादिता गायत्री विष्णुशक्ति-रिति वक्तुं नार्हसि गायत्रीहृदये गायत्र्युत्पत्तिप्रकारोऽपि नितरां प्रतिपादितस्तद्द्वारा प्रणवात् व्याहृत्युत्पत्तिः व्याहृतीभ्यः गायत्र्युत्पत्तिः गायत्र्याः सावित्र्युत्पत्तिः सावित्र्याः सरस्वत्यु-त्पत्तिः सरस्वत्या वेदोत्पत्तिः वेदेभ्यः ब्रह्मोत्पत्तिः ब्रह्मणो लोकोत्पत्तिः एवं स्थिते प्रकृतिकार्य्ये किं चिन्त्यं। एतत्सर्व्व-स्यापि प्रणवजन्यत्वं सिद्धं भवति। प्रणवस्य तु ओमित्येतद्दग्रे प्रजायतेति जन्यत्वं दर्शयति श्रुतिः। प्रणवं प्रथमं परमेश्वरा-दजायतेति भाष्येऽप्युक्तं। परस्मादात्मन एव प्रणवोत्पत्तिः सिद्धैव।

यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः।
तस्य प्रकृतिलीनस्य यः परः स महेश्वरः॥ इति।

नारायणोपनिषद्वचनान्महेश्वरस्य जगत्कारणत्वाच्च। तस्मादेव गायत्री जाता जगदुत्पत्तिहेतवे। स्वमायाप्रविष्टस्य तस्य पञ्चवक्त्रचन्द्रमुकुटविशेषणस्य शक्तिरेव गायत्रीति समाधानं बृहदारण्यके अन्तर्यामिब्राह्मणे, य आदित्ये तिष्ठन्नादित्यादन्त-रो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येष त अन्तर्याम्यमृत इति। यस्य परमात्मनः आदित्यः शरीरं भवति अष्टमूर्त्त्यन्तःपातित्वेनादित्यः शिवस्य शरीर-मेव। एवञ्चादित्यशरीरस्य ईशानस्य तेजोरूपा गायत्री तस्याः पञ्चवक्त्र चन्द्रचूडत्वादुपपन्नं। अतः चक्रस्यायुधविशेषत्वात रुद्रस्याप्युपपन्नमेव। तस्माद्देवतान्तरत्वान्नैव गायत्र्युपासनीया

वैष्णवेन। तथैवाग्निरपि परित्याज्यः तस्य रुद्रत्वात् अष्टमूर्त्त्यन्तःपातित्वात् यो रुद्रो अग्नौ योऽप्सु य ओषधिषु यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमोऽस्त्विति श्रुतेः। रविस्त्वीशानमूर्त्तिरिति प्रतिपादित एव। तस्मात् गायत्र्याऽप्युपासनं वैष्णवः कर्त्तुं नार्हसि त्वं। एवं ब्राह्मण्यनिवृत्तावपि आत्मानं वैष्णवोऽस्मीति यद्युच्येत तर्हि प्रारब्धस्यातिविचित्रत्वात् को वा भवान्नास्माकन्तदुपयोगः जातिभ्रंशसामर्थ्यादकत्वात् ज्ञानमतवत् भक्तादिषु नानामतावलम्बिनां (१) नियमातिक्रमवृत्तिमतां यथा जातिभ्रंशस्तथैवेत्यर्थः। तस्माद् ज्ञाने जाते संसारनिवृत्तेरेव फलं लभ्यते नित्यसंसारिणामस्माकं ज्ञानमतमिति वदतां जात्याश्रमविहितकर्म्मभ्रष्टानां किमु वक्तव्यं तद्वदित्यर्थः। नित्यनैमित्तिककर्म्मपरित्यागे ज्ञानमतावलम्बः तदन्यत्रानियमान्नितम्बिनीपरिसेवने कस्य मतस्यावलम्बो वास्माभिर्वेदितव्यः श्रुतिस्मृत्युक्तनियमच्छेदिनां ज्ञानकर्म्ममार्गद्वयभ्रष्टानां मतं किमस्तीति। उक्तञ्च

जीवन् कर्म्मपरित्यागं यः करोति नराधमः।

स मूढ़ो नरके शेते यावदाभूतसंप्लवं॥ इत्यादिना।

एवं वैष्णवमतस्य दौर्ब्बल्ये प्राप्ते माधवाख्यो वैष्णव इदमाह। स्वामिन्याञ्चरात्रागमे तप्तशङ्खचक्रे द्विभुजे धार्य्ये तेन परमं लोकं यातीति सम्यगागमदीक्षितस्य फलं प्रतिपादितं। वैष्णवस्याप्रामाण्ये आगमस्य सुतरामप्रामाण्यप्रवृत्तिः स्यात्।

---

१ ज्ञानमतावलम्बिनां। वा. पु.।

तस्मादेवमवमतमवश्यमङ्गीकर्त्तव्यमित्यवोच्यते । आगमोक्ततप्त-शङ्खचक्रधारणमयुक्तं वेदविरुद्धत्वात् ब्रह्मादुरुत्पत्तेः पूर्व्वभाविनो वेदस्य विरुद्धत्वे प्रोच्यमाने महानेव दोषः प्रसज्येत् तद्विरुद्धाचारे तद्वेव (१) सर्व्वप्रणीतागमविरुद्धतापि तथैवेति चेन्न आगमेतिहासपुराणोक्ताचारस्तु वेदानुकूलत्वत्या ग्राह्यः, अग्राह्य एव तत्प्रतिकूलः । उक्तञ्च

अतीन्द्रियार्थविज्ञाने प्रमाणं श्रुतिरेव हि ।
श्रुत्युक्ताचारतो ग्राह्या आगमानां प्रसज्यता ॥ इति ।

अतः सर्व्वस्यापि वाङ्मयस्य निगममूलत्वेन तद्विरुद्धत्वेन वैष्णवस्याग्राह्यत्वं प्रसक्तं भवति अतः परित्यक्तचक्रादिचिह्नः त्वमद्य प्रतिहतं ब्राह्मणाकारं निर्वर्त्तय यथाशक्तिकर्म्माचरणेनापि प्रत्यवायाभावात् । श्रेयान् स्वधर्म्मो विगुणः परधर्म्मात् स्वनुष्ठितादित्युक्तेः । तस्मात् ब्राह्मणस्य यथोक्तकर्म्माचरणमेव तपः । तेन तपसा यस्तप्ततनुर्भवति स एव तप्ततनुः तस्य अतप्ततनोः पुरुषस्य तदाम तद्धामेत्यर्थः । तस्य भगवतो धाम तेजः अश्नुते न विना विद्यत इत्यर्थः । ज्ञानमृते मोक्षो न भवति तस्य मनोनैर्मल्यमूलं निर्मलेन मनसा संसारकारणस्य भेदस्य निवृत्तेः । ततः परमहमस्मि ब्रह्मेति महावाक्यस्य निष्पन्नत्वात् परं मोक्षमाप्नोति इति सिद्धान्तः ।

सर्व्वभूतेषु चात्मानं सर्व्वभूतानि चात्मनि ।
सम्पश्यन् ब्रह्म परमं याति नान्येन हेतुना ॥ इति श्रुतेः ।

---

१ तत्रैव सर्व्वप्रणीतागम विरुद्धापि । ते. पु. ।

एवं भावनया तत्सत्यज्ञानानन्तलक्षणलक्षितं ब्रह्म त्वमसि ननु पाञ्चरात्रागमदीक्षितो माधवः।

यः परं ब्रह्म सर्व्वात्मा विश्वस्यायतनं महत्।

सूक्ष्मात् सूक्ष्मतरं नित्यं तत्त्वमेव त्वमेव तत्॥ इति श्रुतेः॥

तस्मात् मायाकल्पितचक्राद्यङ्कनादिकं परित्यज्य शुद्धाद्वैतवृत्त्या जीवेशैक्यं कुरु मुक्तो भवसीति,बोधितः त्यक्तचिह्नः परिवर्जितागमाचारः सन्मार्गगामी माधवः स्वकुलग्रामदेशवासिभिः सह शुद्धाद्वैतवृत्तिं प्राप्य स्नानसन्ध्याग्निहोत्रस्वाध्यायवैश्वदेवातिथिपूजापरायणः सर्व्वजगद्रूपेणावगतं ब्रह्मेति ध्यात्वा तथैवाहमस्मीति मुक्तोऽभवत्। इत्यनन्तानन्दगिरिकृतौ पाञ्चरात्रागमनिवर्हणं नामाष्टमं प्रकरणं॥ * ॥

# नवमं प्रकरणं ।

—————०*०————

एवं परिहृतेषु भक्तभागवतवैष्णवपाञ्चरात्रिषु पुनरन्यो वैखानसमताचारः व्यास इति प्रत्यवतिष्ठते मन्त्रवर्णात् स्वामिन् भवता निरस्ताः भक्तादयः चत्वारः तज्ज्ञानमार्गवर्त्तिनस्तु इदानीमहमागतोऽस्मि व्यासदासः वैखानसमताचाराग्रणीः न च अह्नापि मत्पक्षं निवारयितुं कुशलः मदीयमते श्रस्य नारायणस्य सर्व्वोत्कृष्टत्वात् शङ्खचक्राद्यङ्किताङ्गैरुपदिष्टोऽहं विष्णुः सर्व्वोत्तम इति अस्मन्मतस्य श्रुतिरूढत्वञ्चेति तथा मन्त्रश्च । तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः दिवीव चक्षुराततं । तद्विप्रासो विपन्यवो जागृवांसस्समिन्धते । अस्यार्थः । सूरयः विद्वांसः विष्णोः नारायणस्य तत्प्रसिद्धं परमं पदं उत्कृष्टं स्थानं वैकुण्ठाख्यं सदा सार्व्वकालिकं पश्यन्ति तथाविधस्थानं कदा वयं प्राप्स्याम इति पश्यन्तीत्यर्थः तत्पदं किम्बिधं दिवि द्युलोके आततं विस्तृतं चक्षुरिव वर्त्तमानं

चक्षुषोऽधिदैवतं सूर्य्य इव प्रकाशमानमित्यर्थः विप्रासः मा-
ह्मणा विगतं पन्यं पापं येषां ते विपन्यवः जागृवांसः
विगतनिद्राः निद्रालस्यादिनिन्द्यगुणरहिता इत्यर्थः वि-
ष्णोः नारायणस्य परमं सर्व्वापेक्षया पूज्यं पदं स्थानं यद्वर्त्तते
तत् समिन्धते ध्यायन्तीत्यर्थः। तस्मात् सर्व्वदेवस्थानापेक्षया
विष्णुपदस्य श्रेष्ठत्वात्। अनेन हि नारायणस्य सर्व्वोत्तमत्वं
सिद्धमेव। नारायणाद्ब्रह्मा जायते रुद्रा वसव इत्यादिना
नारायणोपनिषदुक्तप्रकारेण सर्व्वदेवकारणत्वं नारायणे घटते।
अन्तर्वहिश्च तत् सर्व्वं व्याप्य नारायणः स्थित इत्यादिना
नारायण एव परं ब्रह्म नराणां समूहो नारं तत्रायनं स्थानं
यस्य नारायणः रेफात्पर नकारस्य णत्वविधानात् सर्व्वप्राणि-
बुद्धिगुहानिवासाच्छुद्धचैतन्यमित्यर्थः। तस्मान्नारायणभक्तानां
तदङ्कधारणमुचितमेव। वैखानसो विष्णुभक्तो विरचितो पुण्ड्रः
शङ्खचक्राभ्यां पवित्रगात्र इति। अतः शङ्खचक्रोर्द्धपुण्ड्राद्यङ्कितः
विष्णुभक्त इति शास्त्रे प्रोच्यते। भो व्यासदास भवदुक्तमन्त्र-
द्वये विष्णुलोकस्य तेजोरूपत्वं विद्वत्प्रार्थ्यत्वं प्रदर्शितं। माया-
तीतस्य परमात्मनः सकाशात् अजा गुणत्रयमयी किल अजा-
यत ततः महत्तत्त्वं तस्मादहङ्कारस्त्रिगुण उत्पन्नः। विष्णुपु-
राणे।

वैकारिकस्तामसश्च भूतादिश्चैव राजसः।
त्रिविधोऽयमहङ्कारो महत्तत्वादजायत॥

इति वचनबलात् तस्य ब्रह्मविष्णुशिवात्मकत्वं प्राप्तं।

ते सृष्टिस्थितिलयकर्त्तारः तस्मात् पालनकर्त्ता विष्णुरित्युच्यते। व्यापकस्य पालनत्वेनैव सिद्धे सर्व्वभूतबहिरन्तःस्थितत्वेन नारायण इति नाम तस्य प्राप्तं। अतः पालनकर्त्तुर्विष्णोः पदं स्थानं सदा पश्यन्ति सूरय इत्युक्ते का वास्माकं हानिः। पालनकर्त्ता वा परब्रह्म वा विष्णुर्भवतु न चास्माकं तत् क्लेशः सर्व्वेषां देवानामात्मैकायनमिति बृहदारण्यकश्रुतेः परब्रह्मणः सर्व्वदेवमयत्वात् तस्मादोँङ्कार उत्पन्नो गुणत्रयसमाकृतिरिति। स मायायतन एव। उत्पन्नस्य प्रणवस्यार्णाः अकारोकारमकाराः परो विन्दुः तस्मात् मकारः तस्मादुकारः तस्मादकार इति प्रवृत्तिक्रमः निवृत्तिक्रमस्तु अकार उकारे लीयते उकारस्तु मकारे मकारो विन्दौ विन्दुरजायां सा परब्रह्मणि इति व्यवस्थितिः। एवम्भूतप्रणवोऽथ रुद्रविष्णुब्रह्माणः लयस्थितिसृष्टिकर्त्तारः तेषां मेरुशिखरेषु लोका वर्त्तन्ते ते तु तत्तदुपासकानां प्राप्याः सगुणत्वादनित्यत्वाच्च यः सोऽहं ब्रह्मास्मीत्यात्मानमद्वितीयं वेद तस्य पुनः संसारप्राप्तिर्नेति किल सिद्धान्तः। भवान् विष्णुभक्तः तत्प्रीत्यै नित्यकर्म्म कुरु ब्राह्मणानां कर्मप्राधान्यात्, नहि तप्तचक्रादिधारणं कुरु तत्र प्रमाणाभावात्। आगम एव मानमिति यद्यप्युच्यते तथा न वक्तव्यं। आगमस्य खण्डद्वयात्मकत्वात् ग्राह्यखण्डोऽग्राह्यखण्डश्चेति। कोवा ग्राह्यखण्डः निगमानुकूलखण्डस्तावत् ग्राह्यः। अग्राह्यस्तद्विरुद्धः। विरुद्धोऽप्यागमस्य प्रामाण्याद्ग्राह्य इति यदुच्यते तर्हि ब्राह्मण्यहानिः स्यात् न सुरां पिबेत न कलञ्जं भक्षयेत् न परदारां गच्छेत्

नाग्नीनुद्वासयेदित्यादिनिगमनिषेधेषु आगमग्राह्यलस्याचारोपदेशे वर्त्तते निगमविरोधोऽस्तु आगमबलात्तदाचारनिष्ठां करोति यदि तत्प्रतिग्राही भवति तदा स पतितो भवति, तस्मान्निगमस्तत्त्वच्छेदिनो गतिरिहामुत्रापि न विद्यते अतस्तप्तचक्रादिधारणं न युक्तमिति एवमाचार्य्यैः प्रतिपादिते व्यासदास इदमुवाच स्वामिन् यथागमाचारः प्रमाणं पूर्व्वस्मिन् युगे दत्तात्रेयः परमयोगविदपि पञ्चमुद्रामुदितः कथमासीत् तस्मात् महद्भिः परिगृहीतो मार्गः शङ्खचक्रादिधारणपरः स्वीकर्त्तव्य एव किञ्च पुराणेषु च दर्शनात्। यत्र यत्र वैष्णवधर्मा उक्ताः तत्र तत्र चक्राद्यङ्कनं पुरःसरमेव वर्त्तते तद्द्वाराऽपि तदङ्गीकारः सिद्ध इति भगवच्चिह्नाभावे वैष्णवत्वहानेः। तस्मात् भगवच्चिह्नधारणमवश्यं कर्त्तव्यमिति पूर्व्वपक्षे प्राप्ते तत्राचार्य्यैरिदमुच्यते। व्यासदास भवदविवेकः किमु वक्तव्यः, मुद्राङ्किततनुः दत्तात्रेय इति केन श्रुतं, तस्य मुद्राङ्कने किमु प्रयोजनं परमयोगविदस्तस्य भूतजयवृत्तिनिष्ठस्य नियमाभावात् स्वगात्रनिष्ठपञ्चीकृतपञ्चभूतानि अपञ्चीकृतभूतेषु संयोज्यते कस्मिन्नाचिह्नि अहमत्रस्थ इत्युत्तरं जल्पं नास्ति तस्य महायोगिनः वहिरङ्केन किं प्रयोजनमस्ति (१) बाला अपि जानन्ति। किञ्च सर्व्वभूतानि स्वान्तः सर्व्वभूतान्तः स्वं च ध्यायतः जीवन्मुक्तस्य दत्तात्रेयस्य

---

१ वहिरङ्केन प्रयोजनमस्ति न वेत्ति। स. पु.। का. पु.। तै. पु.।

विमङ्केन प्रयोजनं। किञ्च स्वाविर्भूतकालादेकादशाब्दमितं (१) ब्रह्मादीनां सम्पाद्य द्वादशदलपद्मदललिखितवीजमन्त्रार्चा-दि-(२)-विदितमृत्युनिवर्हणहेतुकालसङ्कर्षणीविद्याकोविदस्य परमयोगिनः किं वहिरङ्केन। किञ्च कचपुटिमन्त्रराज-विदितसकलजगन्नाथस्य वहिःप्रपञ्चेन मायाकृतचिह्नेन न हि किञ्चित्। अष्टभूतसम्पन्नस्य (३) सर्व्वदेवपूज्यस्य किं वहिर-ङ्केन, तस्माच्चक्राङ्कनकर्त्तव्यं कार्य्यमिति मन्दबुद्धिं दुराचारमू-ढ़तां परित्यज्य विगतचिह्नः सुखेन वर्त्तय। पुराणेषु भगवद्भ-क्तानां भगवच्चिह्नधारणं श्रुतमिति युक्तं न हि तदप्यर्हं। कथं को वा प्रह्लादस्य चक्राङ्कनं कारयामास नृसिंहाविर्भावमूलत्वात् विष्णु-भक्तिरस्तीति किमु वक्तव्यः। गजेन्द्रः केन चक्राङ्कितः तस्यार्त्ति-परिहाराय चक्रहस्तो विष्णुः कथमागतः। विभीषणस्य को वा वहिश्चिह्नमाचकार (४) रामः शाश्वतलङ्काधिपत्यं कथमददात्। ध्रुवः केन लिङ्गभृत् तस्य ब्रह्माण्डपर्य्यन्ते स्थितिः कथमा-सीत्। द्रौपदी केन चिह्नेनाङ्किता तस्याः स्मरणमात्रेण वस्त्र-चयदाताऽभूत्। अतो व्यासदास मूढ़बुद्धिं परित्यज्य वहिर्लिङ्ग

---

१ स्वाविर्भूतकालादेकादशाब्दमितं। सं. पु.। का. पु.। तै पु.।

२ द्वादशदलपद्मदलवीजमर्चादिविदित। वा. पु.। स पु. का. पु.।

३ अजस्येऽधिकः। वा. पु.।

४ वह्निचिह्नमाचकार। वा. पु.।

त्यक्ता चर्मविकारसाधनं सोऽहंभावेन व्यक्तभेदादिकस्वभावः परमोत्तमत्वापद्यतीति भगवच्चिह्नं धारणीयमित्युक्तं तत्र भगवद्देहनिष्ठ चिह्नं वा उत भगवद्धृतचिह्नं वा नाद्यः भगवद्देहे वक्षःस्थले लक्ष्मीकौस्तुभचिह्नं उदरे चतुर्द्दशभुवनचिह्नं पादादिनाभिपर्य्यन्तमधोलोकचिह्नमत ऊर्द्धमूर्द्धचिह्नमच्णोः सूर्य्यचन्द्रचिह्नं जिह्वायामनन्तवेदचिह्नं एवमनेकचिह्नानि भगवद्देहे वर्त्तन्ते समर्थश्चेत् तच्चिह्नावलम्बनं कुरु। यस्य कस्यापि मनुष्यस्य भगवद्देहचिह्नासम्भवात् प्रथमपक्षो दूषितः। न द्वितीयः। भगवत्करनिष्ठायुधचिह्नस्यात्यन्तासम्भवात्। तदाकाराकारितत‍प्तलोहमिति (१) चेन्न। यस्य कस्यापि विष्णुचक्रदर्शनाभावात् शङ्खस्य च तथात्वात् यथेच्छालोहतापोऽत्र विवक्षितो भवति न हि तेन किञ्चित् प्रयोजनं चर्महानिस्तते चक्रस्य वर्त्तुलत्वं। शङ्खस्य च पृथगुभ्राकारत्वं (२) लोहेन परिकल्प्य कणाङ्गारेषु (३) तप्तं कृत्वा ताभ्यां भुजयोरङ्कनं कारयामीति चेत् मूर्खजनसम्प्रतीतिः (४) स्यात्। तथा चेत् विष्णुतल्पं शेष इति विष्णुवाहनं गरुड़ इति च लोहेन तद्रूपं च कृत्वा ताभ्यां चाङ्कनीयं भुजद्वयं शङ्खचक्राभ्यामङ्कितं एतद्द्वन्द्वं कुर्वेत्युक्ते कपोलयुगले गले ललाटे भुजापेक्षया ऊर्द्धकायस्य श्रेष्ठत्वात्, तत्र स्थाने-

१ तप्तलोहचिह्नमिति। वै. पु.।

२ तथात्वादित्यधिकः। का. पु.। स. पु.। वा. पु.।

३ अङ्गेषु। स. पु.। वा. पु.। कां. पु.।

४ प्रीतिः स्यात्। का. पु.। वा. पु.। स. पु.।

न्द्रियवाङ्मयाख कर्मेन्द्रियप्राचुर्य्ये वाङ्दण्डे विक्षिते ज्ञानेन्द्रियसान्निध्ये कपोलयुगले च नष्टे ज्ञानकर्म्मभ्यां विना पञ्चदण्डमुचितो भवति। विधिनिषेधात्मकदण्डद्वये भग्ने बन्धनिवृत्तिः स्यात्। तस्मात् ज्ञानकर्मस्वरूपबन्धनिवृत्तौ जातायां यथेच्छाविहरणशीलत्वं युक्तमेव परत्र यमादिभ्यो जितोभयलोकस्य तव किं भयं विद्यते। वैष्णवोपाधिना स्मार्त्तकर्मपरित्यागं कुर्व्वतस्तव शुभ्रभस्मधारणमात्रमेवावशिष्यते नैत्यग्निहोत्रादिकं कर्म्म। अतः शुद्धवैष्णववृत्तिमाश्रित्य त्वं स्वस्थो भवेत्युक्तः व्यासदासः श्रीमच्छङ्कराचार्य्यमिदमब्रवीत्। स्वामिन् यतिवर्य्य भवत्कृपया जातविवेकोऽस्मि नाहं चक्राद्यङ्कितः किन्तु मद्गुरुस्तदङ्काङ्कित इति श्रुतं, वैखानसमतमवलम्ब्य किञ्चित्तत्र वर्त्तिनं (१) मां शुद्धाद्वैतवर्तिनं कुर्व्विति विज्ञाप्य दण्डवदभिवाद्य सम्पुटितकरद्वयमीषन्नम्रशिरस्कं व्यासदासं दृष्ट्वा करुणासमुद्रः श्रीशङ्कराचार्य्यः प्रहसन् तं इदमाह शृणु व्यासदास भवतस्त्वनायासेन मुक्तिकारणं।

ब्रह्मैवाहं न संसारी मुक्तोऽहमिति भावय।
तस्मिन्विधावशक्तस्त्वं वाक्यमेतदुदीरय॥
इत्यभ्यास-(२)-परित्यक्तद्वन्द्वेषणषडूर्मिकः।
विदित्वा परमात्मानं मुक्तो भवसि नान्यथा॥

---

१ किञ्चित्तत्रवर्त्तिनं। तै. पु.।

२ इत्याभास। का. पु.। स. पु.। तै. पु.।

इति सम्बोधितः शिष्यः कृतार्थोऽहमितीरयन्।
ब्रह्माहमिति संजल्पन् ययौ स्वकुलसंयुतः॥

इत्यनन्तानन्दगिरिकृतौ वैखानसमतनिवर्हणं नाम नवमं प्रकरणम् ॥ * ॥

## दशमं प्रकरणं ।

———०*०———

एवं परिहृतेषु भक्तभागवतवैष्णवपाञ्चरात्रवैखानसेषु पुनरन्यः कर्म्महीनः प्रतिपन्नः समागतो ऽभवत् नामतीर्थ इति । स तु श्रीशङ्कराचार्य्यं दृष्ट्वा इदमुवाच ।

भोः स्वामिन् चिरकालनिष्ठाभ्यासपटिष्ठा (१) भक्तादयः श्रीमद्भिर्निवृत्ताः खलु इतःपरमागतं तृणीकृतकर्म्माणं विष्णुदासाग्रगण्यं नामतीर्थं मां विद्धि, विष्णुरेव गतिरिति निश्चितवता मया साधनान्तरं मन्त्रान्तरं गुर्व्वन्तरं देवतान्तरं परमपि न दृष्टं सर्व्वं विष्णुमयं जगदिति गुरूपदेशात् गुरुरेव मोक्षदः तदानीं भगवन्तमेवं प्रार्थयेत् इमं मत्कृत्यं निजपदारविन्दं प्रापयेति । एवं मद्गुरुनिरुक्तो (२) भगवानपि तथा करोति तस्मान्मम पुनर्जननहेत्वभावात् जीवन्मुक्त एव मन्मतमन्यथा कर्त्तुमसमर्थः शेषोऽपि अतः सर्व्वे आह्वाताः कर्म्महो-

---

१ निष्ठाभ्यासपटीयांसः । बा. पु. । का. पु. । स. पु. ।

२ मद्गुरुभिरुक्तो । बा. पु. । स. पु. । का. पु. ।

नेति सुलभमनन्यदेवं विष्णुभक्तत्वा भवतोऽपि मुक्ता भविष्यतीति नामतीर्थे नैवमुक्तः परमयतिः श्रीमच्छङ्कराचार्य्य इदमाह भो नामतीर्थ मूढतरोऽसि किञ्चिदपि बाल्ये गुरुकुले वासं कृत्वा भवता मन्दबुद्धिना नाधीतं। कर्मभ्रष्टस्य भवतः जीवन्मुक्तिरेव सम्यगुक्ता तावत्, ज्ञानिनः प्रवृत्तिर्बालोन्मत्तपिशाचवत् किल लोके भवितव्या अतो भवद्वृत्तिरपि निन्द्यानिन्द्यं विना पिशाचवद्भवत् (१)। लोके मार्गद्वयं वर्त्तते कर्ममार्गः ज्ञानमार्गश्चेति, तत्राद्यः स्वर्गादिकामनया श्रुतिस्मृत्युक्तकर्मकरणं। ज्ञानमार्गो नाम वेदोक्तसर्व्वकर्माणि कृत्वा तत्फलसमर्पणं भगवति परमेश्वरे कर्त्तव्यमिति पूर्व्वमुक्तं। कर्मफलपरित्याग एव ज्ञानमार्गहेतुमार्गः। तस्मान्मार्गद्वयाद्भ्रष्टं त्वां दण्डनं कर्त्तव्यं। ब्राह्मणः कर्म्म कुर्व्वीतेत्यादिप्रमाणवचनानां सद्भावात्। एकदिनसन्ध्यातिक्रमदोषपरिहारः प्राजापत्यकृच्छ्रत्रयेण भवति, बहुवर्षेषु गतेषु भवद्ब्राह्मण्यं किमु वक्तव्यं। कर्मबहिष्कृतस्य विष्णुभक्तावपि अधिकारो नास्त्येव। उक्तञ्च भागवते भगवद्भक्तस्य लक्षणं।

न चलति निजवर्णधर्मतो यः
सममतिरात्मसुहृद्विपक्षपक्षे।
न हरति न च हन्ति किञ्चिदुच्चैः
सततमम् तमवेहि विष्णुभक्तं॥ इति॥

तस्मान्निजवर्णधर्माच्चलितस्य तव ब्राह्मण्याभावात् सुतरां

१ वर्त्तमान पिशाचवदभवत्। वै. पु.।

विष्णुभक्तिर्नास्त्येव। कर्मप्रतिपादकानां भगवदाज्ञारूपाणां वेदानामुल्लङ्घनात्।

श्रुतिस्मृतिसदाचारा आज्ञारूपा हि मे मताः।
आज्ञाच्छेदी मम द्रोही स याति नरकं सदा॥ इति॥

भगवद्वचनात् श्रुतिस्मृती भगवदाज्ञे अतो भगवदाज्ञाच्छेदिनस्तव तन्मन्त्राधिकारमात्रं च न। गायत्रीमन्त्रं ते ब्राह्मणाभावात् मन्त्रान्तरमवश्यमङ्गीकर्त्तव्यं साधनान्तरं जातकर्मादिकर्म गुर्व्वन्तरञ्च देवतान्तरं अग्निर्देवो द्विजातीनामितिवचनात् अग्निपरित्यागे कृते पतितो भवति एवं चतुर्णां विद्यमानत्वात् तदनुष्ठानाभावे महापातकदर्शनाच्च। ब्रह्मचारी गृही वनस्थः केन धैर्य्येण कर्मत्यागः कर्त्तुं शक्यते परमहंसमन्त्राणं विना तेषां विधिदर्शनात्। "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुरिति।" तस्माद्भवान् सभां गत्वा द्वादश प्रदक्षिणनमस्कारान् कृत्वा समस्तापराधं चमध्वमिति विश्वासपूर्व्वकं सम्प्रार्थ्य ब्रह्मदण्डं समर्प्य ब्राह्मण्यं सम्पाद्य कृतार्थो भव इति श्रीशङ्कराचार्य्यैरुक्तः नामतीर्थः प्रणामपूर्वेन श्रीगुरुं प्रीतं कृत्वा ब्राह्मणकर्मशीलः सगणोऽभवत्। तत्तन्मतस्थानवादिनश्च स्वस्वसिद्धान्तनिरसनमाचार्य्यकृतं दृष्ट्वा सर्व्वे कृतप्रायश्चित्ताः त्रिपुण्ड्रधारिणः पञ्चयज्ञपञ्चपूजापरायणाः शुद्धाद्वैतमतावलम्बिनो निगमाचारपरतन्त्रा बभूवुः। इत्यनन्तानन्दगिरिकृतौ कर्महीनवैष्णवमतनिबर्हणं नाम दशमं प्रकरणं॥ * ॥

# एकादशं प्रकरणं ।

तदनन्तरमनन्तशयनात्पश्चिममार्गेण पञ्चदशदिनैः सुब्रह्मण्यं नाम कुमाराविर्भूतस्थलं सकलदेशिकशिष्यैः सेवितः श्रीशङ्कराचार्य्यः परमहंसगुरुः प्राप ।

स्नात्वा कुमारधारायां नद्यां शिष्यसमन्वितः ।
भक्त्या संपूजयामास षण्मुखं शिवरूपिणं ॥
काषायवस्त्रदण्डाढ्यः कमण्डलुलसत्करः ।
भूतिभूषितसर्व्वाङ्गो बभौ रुद्र इव स्वयं ॥
नानादेशस्थविप्राघाः सुब्रह्मण्यं समागताः ।
दृष्ट्वा तं शङ्कराचार्य्यमिदमूचुः सुविस्मिताः ॥

स्वामिन् ब्राह्मणा वयं ब्रह्मकुलजाः किल मन्वादिस्मृत्युक्ताचारशीलाः हिरण्यगर्भोपासनपरिलब्धमनस्थैर्य्याः सर्व्वं ब्रह्मनिर्म्मितं जगदिति ब्रह्मण एव सृष्टिस्थितिलयकर्त्तृत्वं निश्चय कृत्वा वसामः (१) हिरण्यगर्भस्य जगत्कारणत्वं तज्ज्ञानान्मोक्षश्च श्रुतिसिद्धः । तथाहि ।

---

१ ब्राह्मणा वयं मन्वादिस्मृत्युक्ताचारशीलाः हिरण्यगर्भ एव जगतः सृष्टिस्थितिलयकर्त्तेति निश्चित्य तदुपासनपरिलब्धमनःस्थैर्य्याः सन्तोऽत्र वसामः । स. पु. । क्वचित् ।

हिरण्यगर्भः समवर्त्तताग्रे
भूतस्य जातः पतिरेक आसीत् ।
सदा धार पृथिवीन्द्यामुतेमा-
ङ्कस्मै देवाय हविषा विधेमः ॥ इति ॥

एतदृचा हिरण्यगर्भः चतुर्मुखो ब्रह्मा अग्रे जगदादौ समवर्त्तत । भूतस्य आकाशादिप्रपञ्चस्य पतिः स्वामी तस्मादेव आकाशादुत्पत्तिरित्यर्थः । अयं हिरण्यगर्भः एक एव जातः परब्रह्मणः निर्गुणात् सत्यज्ञानानन्तलक्षणादाविर्भूतः एक एव हिरण्यगर्भ इत्यर्थः । स चादावेक एवासीदिति एवकारः इतरसत्तामात्रनिवृत्तिकरः । स पृथिवीं उत द्यां दिवि इमां सदा धार सततं धृतवानित्यर्थः । तादृशं ब्रह्माणमृते कस्मै देवाय हविषा विधेमः । अतः सर्व्वकर्त्तृत्वविभोक्तृत्वं ब्रह्मण एव घटते । किञ्च सर्व्वदेवापेक्षया ब्रह्मण एव परमत्वं श्रूयते । "ब्रह्मा ब्रह्मा हि परः परो हि ब्रह्मेति" इत्युक्त्या एतदपेक्षया परं नास्तीत्यर्थः । किञ्च वरुणोपनिषदि । सैषानन्दस्य मीमांसा भवतीत्युपक्रम्य स एको ब्रह्मण आनन्द इत्यन्तेन ग्रन्थेन सर्व्वापेक्षया ब्रह्मानन्दस्य श्रेष्ठत्वं दर्शितं तत्परानन्दस्याभावात् । स चतुर्मुखः तत् सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवदिति श्रुतेरयमर्थः । तत्कार्य्यरूपं जगत् सृष्ट्वा उत्पाद्य तदेव स्वसृष्टमेव अयमेव एवकारो देहलीदीपन्यायेन तथानुप्राविशदित्यनेन सम्बध्यते अनुकार्य्यं सृष्टिमनु प्रविष्टोऽपि ब्रह्मा, तत्प्रपञ्चमनुप्रविश्य सच्च तेजोत्यन्नरूपं(१)त्यच्च वाय्वाकाशरूपं चकारात् पञ्चभूतरूपशरी-

१ तेजोवन्नरूपं । वा. पु. ।

रान्तर्गतबुद्ध्यादिप्रेरकजीवरूपस्य अभवत्। बह्वीभ्यां प्रजायेयेत्यादिवचनेभ्यश्च सर्व्वप्रपञ्चस्य ब्रह्मस्वरूपत्वं ब्रह्माधारकत्वञ्च निरुक्तिदशायां ब्रह्मण्येव लयत्वञ्च सिद्धं भवति। अतः सर्व्वदेवप्रतिपाद्यमानस्य श्रेष्ठत्वात्तस्य दक्षिणवामबाहुभ्यां विप्ररुद्रोत्पत्तिदर्शनात् तद्भक्ताश्च तत्सम्बन्धिकमण्डलुकूर्च्चादिचिह्निनाः कर्म्मज्ञानमार्गद्वयावलम्बिनः क्रमात् कमण्डलुकूर्चादिधारिणो वा जगद्धितहोमविधिकर्म्मविप्रविधि- (१) युद्धब्रह्मकमण्डलुकीर्त्तियाग-(२) कूर्चब्रह्मवेदिग्रहनतुर्विमतविधिवेदपाणिनिगमसूत्र-(३) श्रुतिपारीण-(४) निगममुनिस्वाध्यायधर्म्मब्रह्मकर्मदेवकर्म्ममुनिकर्म्मयुगपितामहगुरुपरमेष्ठिद्विजपितामहादयः वयं भवन्तं सर्व्वज्ञं यतिपतिमीड्य कृतार्थाः स्मः। किञ्चिदस्माभिर्विज्ञापितमवधारय किमनेन प्रयोजनं। प्रथमजीवाद्धिरण्यगर्भात् सर्व्वे जीवाः जाताः। पुनः पुनः कर्म्मविकारैः जन्ममरणप्रवाहलीनानपि प्रभुर्ब्रह्मा लये एतान् (५) सर्व्वान् सम्भृतान् ब्रह्माण्डादितरे (६) स्वोदरे निवेश्य स्वयमेक एव वर्त्तते

१ कर्म्मविधिविप्रविधि। तै. पु.।

२ कीर्त्तिमार्ग। वा. पु.।

३ निगम सूत्र। तै. पु.।

४ श्रुतिपारीणां। वा. पु.। स. पु.। का. पु.।

५ प्रवाहलीना अपि प्रभुर्ब्रह्मा लये तान्। वा. पु.। का. पु.। स. पु.।

६ ब्रह्माण्डान्तरे। वा. पु.।

सृष्टौ पुनस्तान् स्वकर्मगोलान्तःस्थान् निजप्रकृत्या (१) संयुज्य जन्ममरणप्रवाहसन्तानकरोदिति मद्गुरुभिरुपदिष्टः परमार्थः। ब्रह्मकुक्षिप्राप्तकालो मोक्ष एव तथा च (२) ब्रह्मविदाप्नोति परमिति श्रुत्या चतुर्मुखस्वरूपज्ञानेन तन्मन्त्रोपासनेन च ब्रह्मवित् ब्रह्मस्वरूपज्ञ इत्यर्थः (३) परं मोक्षमवाप्नोति ब्रह्मलोके विष्णुरुद्रादिदेवगोचरे चतुर्मुखकमण्डलुकूर्चादिचिह्नधरो मुक्तः क्रीडति तस्मात् भवान् कमण्डलुरुण्डपाणिः ब्रह्मलोकयोग्य एव मदीयस्नेहात् विशेषात् भवसीति हैरण्यगर्भैरुक्तः परमगुरुः श्रीशङ्कराचार्य्यः पठति।

यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति।
यत् प्रयन्त्यभिसंविशन्ति तद् विजिज्ञासस्व तद्ब्रह्म ॥ इति ॥

ज्ञानार्थिनं भृगुमुद्दिश्य मित्रावरुणेनैवमुक्तं। इमान्याकाशादीनि पञ्च महाभूतानि भौतिकदेहोपेतहिरण्यगर्भादिस्तम्बान्ताः सर्व्वे प्राणिनः यतो वस्तुनः जायन्ते। वै शब्दः स इमान् लोकानसृजतेत्यादिश्रुत्यन्तरप्रसिद्धद्योतनार्थः। उत्पन्नानि च भूतानि येन वस्तुना जीवन्ति स्थितिं लभन्ते प्रयन्ति विनाशं प्रतिपद्यन्ते इमानि भूतानि यदन्त्वभिसंवि-

---

१ इष्टौ पुनस्तावत् स्वकर्म्मगोलान्तस्थनिजप्रकृत्या। वा. पु.। स. पु.। का. पु.।

२ इतरथापि। वा. पु.। का. पु.। स. पु.।

३ ब्रह्मस्वरूपवित् ब्रह्मस्वरूप इत्यर्थः। वा. पु.। स. पु.। का. पु.।

शन्ति साकल्येन प्रविशन्ति यथा फेनतरङ्गबुद्बुदानामुत्पत्तिस्थितिलयाः समुद्रे भवन्ति तद्वज्जगदुत्पत्तिस्थितिलयकारणं वस्तु विचारय तदेव वस्तु त्वया * दृष्टं ब्रह्म तस्य लक्षणन्तु 'सत्यं ज्ञानमनन्तं ब्रह्मेति' सत्यं सर्व्वविकारार्थविलक्षणं (१) तर्हि भावरूपं जड़मित्यत आह ज्ञानं जड़विलक्षणं यद्यभावविलक्षणो भावविशेषस्तर्हि घटादिकमपि तथेत्यत आह अनन्तं देशकालवस्तुपरिच्छेदशून्यं एतावत्युच्यमाने भावः स्यात्। अतो व्यवच्छेदार्थमाह सत्यमिति सत्यमनन्तमित्युच्यमाने जड़मपि स्यात् तद्व्यावृत्त्यर्थं ज्ञानमित्याह यद्यपि ज्ञानमनन्तमित्युच्यमाने सत्यपदस्य न कार्यं ज्ञानस्यासद्विलक्षणत्वात् तथापि ज्ञानमसदिति सर्व्वासद्वादिनः सङ्गिरन्ते तत्पक्षाधिक्षेपार्थं सत्यमित्याह (२)। अयं भावः येनाऽपि सर्व्वासत्यत्वमङ्गीक्रियते तेनाप्यङ्गीक्रियत एव सत्त्वमन्यथा सत्त्वस्यानुपपत्तेः। ततो निरपेक्षत्वादिति हेतुभ्यः सत्यत्वाङ्गीकारणीयतया तादृशसत्यत्वं जड़विलक्षणञ्च स्वयंप्रकाशमानानन्दात्मन एव विद्यया सकलदुःखनाशदर्शनादेवं चेत् ज्ञानविशेषाणां तु ज्ञानमनन्तपदेनापीति न मन्तव्यं अन्तःकरणविद्यावृत्तेरपि (३) ज्ञानशब्दाभिधेयत्वात् तदेव ज्ञानमिदम-

---

* वस्तुतया। वा. पु.। का. पु.। स. पु.। तै. पु.।

१ नकारार्थविलक्षणं। वा. पु.। स. पु.। का. पु.।

२ सर्व्वासदादिनोऽसत्त्वाधिक्षेपार्थं सत्यमित्याह।
वा. पु.।

३ अयं भावः येनापि सर्व्वासत्यत्वमङ्गीक्रियते तेनाप्यङ्गीक्रियत एव सत्त्वमन्यथा सत्त्वस्यानुपपत्तेः। ततो निरपेक्षत्वादिभ्यो

पीति बुद्धिनिवारणार्थमनन्त पदस्योपयोगात् पदत्रयभूमिं स्वरूप लक्षणमखण्डैकरसं ब्रह्म बृंहतेर्धात्वर्थभूतं (१) सर्व्वैर्मुमुक्षुभिरुपासनीयं तदिच्छाप्रकृतिप्रसृष्टं (२) महदादिसर्व्वं जगत्, तस्मात् मायागर्भान्तर्गतस्य हिरण्यगर्भस्य उपासनया मोक्षो नास्त्येव तस्य किञ्चित्फलदत्वात् तर्हि परब्रह्मणोऽपि मोक्षो नास्त्येव तद्विचारस्याशक्यत्वात् अतः प्राप्तमविचार्य्यमेव ब्रह्मेति उच्यते। एतद्विचारकर्त्तव्यता च भाष्ये प्रथमाध्यायस्य प्रथमपादे बहुधा चिन्तिता।

अविचार्य्यं विचार्य्यं वा ब्रह्माध्यासनिरूपणात्।
असन्देहफलत्वाभ्यां न विचारं तदर्हति॥
अध्यासोऽहंब्रह्मशब्दो साङ्गब्रह्म श्रुतीरितं।
सन्देहान्मुक्तिभावाच्च विचार्य्यं ब्रह्म वै ततः॥ इति॥

आत्मा वा अरे द्रष्टव्य इत्यात्मदर्शनफलमुद्दिश्य तत्साधनत्वेन श्रवणं विधीयते। श्रवणं नाम वेदान्तवाक्यानां ब्रह्मणि

---

हेतुभ्यः सत्वस्याङ्गीकारकरणीये न सत्वस्येति जडवैलक्षण्य स्वयंप्रकाशमानानन्दात्मन एव विद्यया सकार्य्यया जाते सति दुःखानात्मत्वदर्शनादेवस्येत् ज्ञानमित्येवात्तु क्षतमनन्तपदे नापीति न मन्तव्यं अन्तःकरणविद्याद्वयोरपि। स. पु.। का. पु.। तै. पु.।

१ अखण्डैकरसार्थमिति। स. पु.। का. पु.। तै. पु.। बृंहते र्धातोरर्थभूतमिति। वा. पु.।

२ तदिच्छासृष्टं। वा. पु.।

तात्पर्य्यं निर्णेतुमनुकूलो न्यायविचारः तदेतद्विचारविधायक-
वाक्यं विषयः श्लोकयोर्न संगृहीतः। सन्देहसंभवहेतोरभावात् संशय-
प्रतीतेः। ब्रह्मविचारात्मकं शास्त्रमारभ्यमनारभ्यं वेति सन्दे-
हः। पूर्व्वोत्तरपक्षयुक्तिद्वयं सर्व्वत्र सन्देहबीजमुक्तं। मना-
नारभ्यमिति तावत्प्राप्तं विषयप्रयोजनयोरभावात् सन्दिग्ध-
त्रिदित्वा तस्याविषयो भवति ब्रह्मत्वं सन्दिग्धं। तथापि तत् किं
ब्रह्माकारेण सन्दिह्यते (१) आत्माकारेण वा। सत्यं ज्ञानमनन्तं
ब्रह्मेति वाक्येन ब्रह्माकारस्य निश्चयात्। न द्वितीयः अहम्प्रत्य-
येनात्माकारस्यापि निश्चयात् अध्यस्तात्मविषयत्वेन भ्रान्तोऽह-
म्प्रत्यय इतिचेन्न अध्यासनिरूपणात् तमःप्रकाशवद्विरुद्धस्वभा-
वयोर्देहात्मनोः शुक्तिरजतवदन्योन्यतादात्म्याध्यासो न निरू-
पयितुं शक्यते। तस्मादभ्रान्ताभ्यां श्रुत्यहम्प्रत्ययाभ्यां निश्चित-
स्यात्मनः असन्दिग्धत्वान्नविचारस्य विषयोऽस्ति नापि प्रयोजनं
पश्यामः उक्तप्रकारेण ब्रह्मात्मनि निश्चितेऽपि मुक्त्यदर्शनात्
तस्मात् तद्ब्रह्म न विचारमर्हतीति शास्त्रमनारम्भणीयमिति
पूर्व्वपक्षिभिराक्षिप्ते अत्रोच्यते।

शास्त्रमारम्भणीयं विषयप्रयोजनसद्भावात् श्रुत्य-
हम्प्रत्यययोर्विप्रतिपत्त्या सन्दिग्धं (२) ब्रह्मात्मवस्तु अयमात्मा
ब्रह्मेति श्रुतिरसङ्गपदार्थं ब्रह्मात्मत्वेनोपदिशति। अहं
मनुष्य इत्याद्यहम्बुद्धिर्देहादितादात्म्याध्यासेनात्मानं गृह्णा-

१ सङ्गृह्यते। वा. पु.।

२ विप्रतिपत्त्यसन्दिग्धं। का. पु.। वा. पु.। स. पु.।

ति। अज्ञस्य च दुर्निरूप्यत्वमलङ्काराय तस्मात् सन्दिग्धं वस्तु विषयः तन्निश्चयेन च मुक्तिलक्षणं प्रयोजनं श्रुत्यादिविद्वदनुभवेन प्रसिद्धं। तस्माद्वेदान्तवाक्यविचारमुखेन ब्रह्मणो विचारार्हत्वाच्च शास्त्रमारम्भणीयमिति सिद्धान्तः। विचारस्तु लक्षणप्रमाणाभ्यामस्तु तत्त्वनिर्णयाद्यधिकः निर्णयानन्तरमखण्डं ब्रह्म स्वयमेव भवतीति निश्चयः। परब्रह्मांशजातरुद्रविष्णुब्रह्मणां परम्पराकर्तृत्वात्तदुपासनायाः फलमप्युक्तमेव।

अतो भो ब्राह्मणाः [illegible] परिहर्त्तव्यं। वृहन्नारदीयादिवचनविरोधात्। कूर्म्मादिवत् चतुर्मुखत्वादेः चिह्नस्य कर्त्तव्यत्वापत्तेश्च। हिरण्यगर्भ एव परममनकारणमित्यप्यसङ्गतं।

यो ब्रह्माणं विदधाति पूर्व्वं
यो वै वेदांश्च प्रहिणोति तस्मै।
तमात्मदेवं शरणं सनातनं
मुमुक्षुर्वै शरणमहं प्रपद्ये॥

इत्यादिश्रुत्या ब्रह्मणः उत्पत्त्यादिश्रवणात्। जगतः परममूलं सत्यं ज्ञानमनन्तं ब्रह्मेत्यादि श्रुतिप्रतिपाद्यं निर्गुणं ब्रह्मैव। यतो वेत्यादिश्रुतयश्च तत्परा एव। अत एव हिरण्यगर्भ इति श्रुतौ जात इति पदं सङ्गच्छते। सत्यादिस्वरूपब्रह्मणः सकाशादुत्पन्न इति तदर्थः। किञ्च चतुर्मुखत्वादिसाकारोपासनायाः भेदघटितत्वेन मुक्त्यभावप्रसङ्गात्। तथा हि श्रूयते। 'उदमन्तरं कुरुतेऽथ तस्य भयं भवतीति।' जीवब्रह्मणो य ऽरमीषत् अन्तरं

भेदं कुरुते अथ तस्य भयं संसारो भवतीत्यर्थः । तस्मात् तत्त्वमस्यहं ब्रह्मास्मीति दैशिकोक्तमार्गेण जीवब्रह्मणोर्भेदं परित्यज्य अभेदभावनया मुक्ता भवथेति आचार्य्येण बोधितास्ते हिरण्यगर्भवादिनः जगद्विधिप्रमुखाः आस्तिकाः सर्वे तथेत्युक्त्वा आचार्य्यं नत्वा तथा चक्रुः ॥ (१)

इत्यनन्तानन्दगिरिकृतौ हैरण्यगर्भमतनिवर्हणं नामैकादशं प्रकरणम् ॥ * ॥

---

१ फलमप्युक्तमेव । अतो ब्रह्मकमण्डलुकूर्चादिधारणं पाषण्डमूलकं परित्यज्य शुद्धाद्वैतपरायणाः शिष्या बभूवुः । वा. पु. ।

द्वादशं प्रकरणं।

———०*०———

एवं परिहृतेषु हैरण्यगर्भेषु पुनरन्ये सुहोत्रवोतिहोत्र-कव्यहोत्रादयः अग्निमतानुवर्त्तिनः प्रत्यवतिष्ठन्ते। ते श्रीमन्तम-द्वैतमतसिद्धान्तकर्त्तारं सर्व्वज्ञं श्रीशङ्कराचार्य्यमिदमूचुः। स्वा-मिन् परमेश्वर अग्निरेवास्माकं देवता कथं मन्त्रवर्णात्।

अग्निरग्रे प्रथमो देवतानां
संजाताना-(१) मुत्तमो विष्णुरासीत्।
यजमानाय परिगृह्य देवान्
दीक्षयेतद्धविरागच्छतं नः॥ (२) इति।

अग्रे सृष्टेः पूर्व्वकाले सर्व्वेषां देवानां प्रथमो ज्येष्ठः अग्निरेक एवासीत् तस्मात् संजातानां सम्यगग्निमनुसृत्य जातानां (३) देवा-

१ संयातानां। स. पु.।

२ दीक्षयेदं हविरागच्छतं नः इति। तै. पु.। दीक्षये तद्धविरिति तु। बा. पु.। स. पु.।

३ ज्येष्ठः स एव संयातानां सम्यगभिमनुसृत्ययातानां। स. पु.।

नां मध्ये विष्णुस्तम आसीत् । यतो दीक्षया यजमानाय देवान् परिगृह्य नोऽस्माकं हविः आगच्छतं यस्य हविः ऊनं भवति तस्य तत् प्रापयतीत्यर्थः ( १ ) । अग्निमुखा वै देवा इति मन्त्रान्तरात् अग्निर्देवो द्विजातीनामिति वचनाच्च तस्य सर्व्वोत्कृष्टत्वं प्राप्तं ब्राह्मणैस्तदुपासनायां क्रियमाणायान्तच्चिह्नानां विस्फुलिङ्गरूपमणिशलाकानां ( २ ) धारणं कर्त्तव्यमेव । ब्राह्मणोचितस्य कर्म्मणः श्रौतस्मार्त्तरूपस्य तत्कारणत्वात् ( ३ ) । ब्राह्मणानामस्माकं अग्निरेव देव इति सिद्धं । तस्यैव सर्व्वपापहरत्वं नारायणोपनिषदि श्रूयते ।

उद्दीप्यस्व जातवेदो अपघ्नन् निर्ऋतिं मम ।
पशूंश्च मह्यमावह जीवनञ्च दिशो दश ॥ इति (४)

अयमर्थः । हे जातवेदः उद्दीप्यस्व मम निर्ऋतिं पापदेव-

---

१ यतो दीक्षिताय यजमानाय देवान् अवगृह्य नोऽस्माकं येन आगच्छन्तं यस्येत्यादि । वा. पु. । यतो देहवते यजमानाय देवान् परिगृह्य नोऽस्माकं हविरागच्छतं प्रापयतीत्यर्थः इति तु ।
स. पु. ।

२ मणिशलिकानां । वा. पु. । का. पु. । स. पु. । तै. पु. । एवं सर्व्वत्र शलिका पाठोऽस्ति ।

३ सर्व्वोत्कृष्टत्वं प्राप्तं । तस्माद्विस्फुलिङ्गरूपमणिशलाकां धृत्वा कृतार्था मुक्ता भविष्यन्ति । ब्राह्मणोचितस्य श्रौतस्मार्त्तरूपस्य तत्कारणादिति । वा. पु. ।

४ दिशो दश । वा. पु. । स. पु. । का. पु. ।

तामपश्नन् संहरन्तित्यर्थः । मह्यमेव पशूनावह । पशूनां चतुष्पदां धेनुप्रमुखानां दानं कुर्व्वित्यर्थः ।

" जीवनं द्रव्य धान्यञ्च श्रियमिच्छेद्धुताशनादिति । "

वचनात् दिशः प्रागादिदिक्षु मम यत्र सुखवसतिर्भवति तद्दिशो दश देशोत्यर्थः । अतः सर्व्वैः विप्रैरग्निरेक एवोपासनीयः । तस्माद्भवन्तोऽप्यग्न्युपासनया कृतार्था भवत इति प्राप्ते ।

आचार्य्यैरिदमुच्यते । नायमग्निः परो देवः । ऋग्वेदब्राह्मणे अग्नेरवमत्व दर्शनात् , अग्निर्वै देवानामवमो विष्णुः परमस्तदन्तरेण सर्व्वा देवता इति । (१)

देवानां मध्ये अग्नेरवमत्वं विष्णोर्व्यापकस्य चैतन्यस्य ब्रह्मणः परमत्वं तदन्तरे तद्द्वयमध्ये अन्याः सर्व्वाः देवता इति, एवं वेदार्थे स्थिते कथमग्नेः परमत्वं वक्तुं शक्यते किन्तु देवानामवम इति देवानां पुरोहितः हविर्भागित्यर्थः । कर्म्मण एवाग्निर्देवता न तु ज्ञानस्य । तथा हि कर्म्मद्वारा ज्ञानकारणमपीति चेत् तस्य भूतेन (२) जन्यत्वश्रवणात् गृहस्थानां श्रौतादिकर्म्मणि प्राप्ते सत्युपास्यदेवतामन्त्रं कल्पनीयं । अग्निमीडे पुरोहित मित्यादि श्रुतेः । यत्र यत्राग्निकारणवाक्यानि वर्त्तन्ते तानि सर्व्वाण्यपि भूताग्निपराण्येवेति योजनीयं । तस्मात् कर्म्मण

---

१ हेगसाहेव प्रकाशित मुम्बयि मुद्रितैतरेय ब्राह्मण इत्यकेतु तदन्तरेण सर्व्वा अन्या देवता इति ।

२ तत्पेण । वा. पु. ।

एवाग्निर्देवता ब्रह्मणोऽप्यन्यता। तदुपासनया चयिष्णुतलोक-वासादिफललाभेऽपि मुक्त्यसम्भवात्। तस्मात्कर्माङ्गतयैवाग्न्युपासनं कृत्वा 'जीवनं द्रव्य धान्यञ्च श्रियमिच्छेद्धुताशनादिति-वचनबोधितं फलं प्राप्य मुक्तये सर्व्वव्यापकचैतन्यस्योपासनां (१) शुद्धाद्वैतवृत्तिमाश्रित्य मुक्ता भविष्यथ तच्चिह्नधारणं च परिहर्त्तव्यं प्रमाणाभावादित्येवमाचार्य्यैरुक्ताः सुहोत्रादयः श्री-शङ्कराचार्य्यं गुरुं प्रणम्य तत्कटाक्षलोकनाद्वैतवृत्तिनः तथोक्तं चक्रुः।

इत्यनन्तानन्दगिरिकृतौ अग्निवादिमतनिवर्हणं नाम द्वादशं प्रकरणम् ॥ * ॥

---

१ उपासनाय। वा पु. । का. पु. । स. पु. । तै. पु. ।

## त्रयोदशं प्रकरणं।

———०*०———

ततः परिपूर्णमण्डलतिलकाः रक्तकुसुमधारिणः सूर्य्य-भक्ताः दिवाकरादयः श्रीशङ्कराचार्य्यमद्वैतमतसिद्धान्तगुरुं नमस्कृत्येदमूचुः। भोः स्वामिन् सूर्य्य एव परमात्मा जगत्कारणं वर्त्तते। स एवास्माकं कुलदेवतमुपास्योऽस्ति तस्य जगत्कारणत्वं श्रुतय एवाहुः। तथा हि "सूर्य्य आत्मा जगतस्तस्थुषश्च।" "असावादित्यो ब्रह्मेति च।" आभ्यां हि सूर्य्यस्य सर्व्वात्मत्वं अस्यैव च परब्रह्मत्वं च प्रतिपादितं भवति। ब्रह्मैव च सर्व्व-जगत्कारणं यतो वा इमानि भूतानि जायन्त इत्यादिश्रुतेः। स्मृतिश्च।

नमः सवित्रे जगदेकचक्षुषे
जगत्प्रसूतिस्थितिनाशहेतवे।
त्रयीमयाय त्रिगुणात्मधारिणे
विरिञ्चिनारायणशङ्करात्मने॥ इति।

तस्मादेतस्य घृणिः सूर्य्य आदित्यमित्यष्टाक्षरमन्त्रोपासकाः

रक्तचन्दनपुष्पमालाधारिणः षड्विधा भक्ता वर्त्तन्ते (१)। केचिदुदयमण्डलं ब्रह्मात्मकत्वेन सृष्टिकारणमिति भजन्ति। केचित्तु खमध्यवर्त्तिनं सूर्य्यं ईश्वररूपेण सर्व्वजगल्लयकारणमिति भजन्ति उपसंहारबलादुपक्रमोऽपि तेनैव भवतीति निश्चयज्ञानेन भजन्ति। केचित्तु अस्तमयकालबिम्बं विष्णवात्मकत्वेन (२) सर्व्वजगत्परिपालनकारणं तदेव सृष्टिलयहेतुभूतं परतत्त्वमिति भजन्ति। केचित्त्रिमूर्त्यात्मकत्वेन त्रिकालमण्डलसेविनः केचिन्मण्डलेक्षणव्रतानुष्ठायिनः तन्मध्यवर्त्तिनं परमात्मान

१ ततःपरं पूर्णमण्डलतिलकाः रक्तकुसुमधारिणः सूर्य्यभक्ताः दिवाकरादयः श्रीशङ्कराचार्य्यमिदमूचुः। स्वामिन्नस्मन्मतमनन्यभेद्यं यतः सूर्य्यः सर्व्वलोकचक्षुः किल। अत एव ब्रह्मादिस्वरूपः तस्मात् सृष्टिस्थितिलयहेतुभूतः स एव परमात्मा भवितुमर्हति सूर्य्य आत्मा जगतस्तस्थुषश्चेतिश्रुतेः। किञ्च परब्रह्मत्वं तस्यैव घटते। असावादित्यो ब्रह्मेति श्रुतेः। अस्यैव भगवतः परमस्योऽष्टाक्षरः घृणिः सूर्य्य आदित्यो न प्रभावात् अक्षरं मधुक्षरं मधति तद्रसं सत्यवैतद्रसमापो ज्योतिरसोऽमृतं ब्रह्म भूर्भुवस्वरोमिति ऋगन्तर्वर्त्ति भगवतोऽष्टाक्षरमन्त्रः तमेव व्याकरोति श्रुतिः घृणिरिति द्वे अक्षरे ओं। सूर्य्य इति त्रीणि आदित्य इति त्रीणि एतद्वैसावित्रस्याष्टाक्षरं पदं श्रियाभिषिक्तं श्रिया अभिषिच्यते इति एतन्मन्त्रोपासकाः सूर्य्यमन्त्रानुवर्त्तिनः रक्तचन्दनपूर्णपुष्पमालाधारिणः बहुविधा भक्ता वर्त्तन्ते। वा पु।

२ विश्वात्मकत्वेन। वा पु।

हिरण्यश्मश्रु हिरण्य केशमित्यादि स्वरूपं भजन्ति। (१) तन्नैक-देशिनस्तु भगवद्दीक्षणमात्रव्रतपराः सत्यङ्मण्डलं दृष्ट्वा षोड़-शोपचारपूजां समर्प्य कर्म्मफलं भगवदर्पणं कृत्वा वर्त्तन्ति न दर्शनं विनाऽश्नन्ति। पुनः केचित्तप्तलोहेन फालभुजवक्षस्थलेषु मण्ड-लचिह्नानि धृत्वा स्वमनस्येव (२) देवमनुवर्णं ध्यायन्तः सन्ति। तेषां सर्वासामेक एव मन्त्र उपासनीयः घृणिः सूर्य्य आदित्य-मिति तत्रानुस्वारलोपश्छान्दसः तस्मादेतन्मन्त्रस्य श्रेष्ठत्वादय-मेव सर्व्वैरुपासनीयः तन्मण्डलस्तुतिपरा श्रुतयः भूयस्यः सन्ति तथाहि। "हंसः शुचिषद्वसुरंतरिक्षसदिति।" "आदित्यो वा एषएतन्मण्डलं तपती" त्युपक्रम्य "य एवं वेदे" त्युपनि-षदन्तेन ग्रन्थेन "ब्रह्मैतदमृत एष पुरुष" इति सूर्य्यस्यैव ब्रह्मत्वं पुरुषत्वञ्च घटते। सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्र पादित्यादि पुरुषसूक्तप्रतिपाद्यः सूर्य्य एव कथं मण्डलादुपरि तमोनिवृत्तये प्रसृताः रश्मयः शीर्षाणि तान्यस्य सन्तीति सहस्रशीर्षा स एवात्मत्वेन पुरीषु अन्तः शेते इति पुरुषः शस्य षः पुरुषः।

पुरसंज्ञे शरीरेऽस्मिन् शयानात् पुरुषो हरिः।
शकारस्य षकारोऽयं व्यत्ययेन प्रयुज्यते॥ इत्युक्तेः॥

---

२ हिरण्यश्मश्रू हिरण्यकेशं आप्रनखात् सर्व्वं एव सुव-र्णस्तस्य यथाकाप्यासं पुण्डरीकमेवमक्षिणीमित्यादिस्वरूपं भज-न्तीत्यधिकः। तै पु।

४ रविं मनस्येव। वा पु।

तस्य सर्व्वप्राणिकर्म्मसाक्षित्वात् सहस्राक्षः। अथः प्रसृता-रश्मयः सहस्रपादाः तस्य ते सन्तीति सहस्रपात्। स एव भूमि विश्वतः समन्तात् वृत्वा व्याप्य ब्रह्ममानेन भूम्युपरि सूर्य्यपर्य्यन्ता-काशस्य दशाङ्गुलपरिमाणत्वात् दशाङ्गुलमिति अतिक्रम्य अति-ष्ठत स्थित इत्यर्थः। इदं परिदृश्यमानं जगत् सर्व्वं पुरुष एव(१) सूर्य्य एवेत्यर्थः। यद्भूतं पूर्व्वकल्पे यद्भूतं तदपि यच्च भव्यं वर्त्तमा-नकल्पापेक्षया भाविकल्पे यज्जगदर्त्तते तद्भानुरित्युच्यते (२) तदपि स एव। उतामृतत्वस्य मोक्षस्य तत्कारणस्य च ईशानः कर्त्तेत्यर्थः। इत्यादिमन्त्रैः ( ३ ) सूर्य्यस्यैव सर्व्वोत्तमत्वमङ्गीक-र्त्तव्यं। अतः पुरुषो ज्यायानिति अत्र बहुवारपठितपुरुष शब्देन एष पुरुष इति शब्दसाम्यात् सर्व्ववेदप्रतिपादितः सूर्य्य एव (४) पुरुषं कृष्णपिङ्गलमित्यादिरुद्रप्रतिपादकमन्त्रस्थ-(५) पुरुषशब्दोऽपि भगवत्पर एव भगवत्पुरुषशब्दावुभावपि सूर्य्यपरावेव कथं हन्ति सर्व्वदा गच्छतीति हंसः शुचिशु शुद्धेषु प्रदेशेषु सीदतीति शुचिषत् वसुः वसुदेवः स एव वासुदेवः तस्मिन् भगवत्पुरुषशब्दावनुपाधिकौ वर्त्तेते।

१ पुरुष एव इति। का. पु.। स. पु.। तै. पु.। पुरुष एष एवेति क्वचित्।

२ तद्भव्यमित्युच्यते। का. पु.। तै. पु.।

३ इत्यादिमन्त्रे। का. पु.। स. पु.। तै. पु.।

४ सूर्य्य एक एव इति। तै. पु.।

५ मन्त्रस्येति। स. पु.। का. पु.। तै. पु.।

भगवानितिशब्दोऽयं तथा पुरुष इत्यपि ।
निरुपाधी प्रवर्त्तेते वासुदेवे सनातने ॥ इति ॥ (१)

भारतवचनात् । ननु नेमौ सूर्य्यप्रतिपादकौ भगवत्पुरुषशब्दौ किन्तु नारायणप्रतिपादकौ । तथा हि । वसुदेवस्यापत्यं वासुदेवः कृष्ण इत्यर्थः । तस्मिन् पूर्णब्रह्मरूपे कृष्णे भगवत्पुरुषशब्दौ निरुपाधिकौ वर्त्तेते । प्रकरणबलादित्याचिक्षे ।

पूर्व्वपक्षावलम्बी पुनराह भगवत्पुरुषशब्दौ सूर्य्यपरावेव (२) तस्यैव विष्णुत्वात् कथं भगवतः सूर्य्यस्य द्वादशभेदात्मकत्वेन विष्णुनामस्तदन्तःपातित्वेन च तद्विरोधो नास्त्येव । अरुणः सूर्य्यो भानुस्तपनश्चन्द्रो रविर्गभस्तिश्चार्य्यमा हिरण्यरेता दिवाकरो मित्रो विष्णुश्चेति वचनात् । 'आदित्यानामहं विष्णुः ज्योतिषां रविरंशुमानिति ' कृष्णवचनगीतादर्शनात् कृष्ण एव सूर्य्यः वासुदेवशब्दसाम्याच्च ध्येयः सदा सवितृमण्डलमध्यवर्त्ती नारायण इति वचनात्तयोर्भेदाभावः । हरतीति स एव हरिः स्वास्तमयकाले सर्व्वप्राणिप्राणहरत्वं (३) तदात्वं अरुणोदये भगवतः प्रसिद्धमेव लोके तथाव्यवस्थादर्शनात् रुद्रोऽपि स एव स्वशक्त्या लोकद्रावणस्य (४) विद्यमानत्वात् अत एव

१ वासनाद्वा सनातन इति । वा. पु. । का. पु. । स. पु. ।

२ वर्त्तेते इत्यधिकः । का. पु. । स. पु. ।

३ सर्व्वप्राणिहरत्वं । वा. पु. ।

४ लोकद्रावकस्येति । वा. पु. । का. पु. । स. पु. ।

नमस्ते रुद्रमन्यव इत्यादिशतमन्त्रप्रतिपादितः सूर्य्य एक एव। तस्य स्वयंव्यक्तस्य सर्व्वदेवात्मकत्वात्। किञ्च ब्रह्मविष्णुरुद्राः सृष्ट्यादिकारणात् सूर्य्यादेव जाताः सर्व्वलोकोद्धरणहेतुभूतस्य सूर्य्यतेजसः शुक्लवर्णत्वेन तद्वर्णादुत्पत्तिः तेषां युक्तैव यच्छुक्लं तद्ब्रह्मेत्युपनिष (१) त्प्रमाणात्। अतः सूर्य्य एव सर्व्वैर्मुमुक्षुभिरुपास्यः। तस्य लिङ्गपूर्णमण्डलधारणादिभिरलङ्कृतगात्रास्तन्मन्त्रजपध्यानासक्ताश्च यूयं मुक्ता भविष्यथेति पूर्व्वपक्षे प्राप्ते।

श्रीशङ्कराचार्य्यैरिदमुच्यते भो दिवाकरमूढ़ किमुक्तं भवता तदसमञ्जसं वेदविरोधात्। तथा हि "चन्द्रमा मनसो जातश्चक्षोः सूर्य्योऽजायतेति" श्रुतेः। सूर्य्यस्यापि जन्यत्वदर्शनात् यज्जन्यं तदनित्यमिति तर्कसिद्धान्तस्य विद्यमानत्वाद्घटादिवदशाश्वतस्य सूर्य्यस्य कथं परब्रह्मत्वं (२) सिध्येत किन्तु तादृक्श्रुतितात्पर्य्यन्तु सूर्य्यनिष्ठपरमात्मपरमित्युन्नेयं जगदीश्वराज्ञावशादेव सूर्य्यो भ्रमतीति तैत्तिरीयके समाम्नातं।

भीषास्माद्वातः पवते भीषोदेति सूर्य्यः।
भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः॥ इति॥

तस्मात् सूर्य्यस्य पारतन्त्रिकत्वं (३) प्राप्तं। किञ्च सूर्य्यादिषु प्रभा (४) जगदीश्वरस्यैव। तथोक्तं श्रुत्यन्तरे

---

१ उपनिषदः इति। वा. पु.।

२ कथं ब्रह्मत्व। वा. पु.।

३ पारतन्त्र्य। वा. पु.।

४ सर्य्यादिनिष्ठप्रभेति। तै. पु.। सर्य्यादिनिज प्रभेति। का. पु.। स. पु.।

न तत्र सूर्य्यो भाति न चन्द्रतारकं
नेमा विद्युतो भान्ति कुतोऽयमग्निः।
तमेव भान्तमनुभाति सर्व्वं
तस्य भासा सर्व्वमिदं विभाति ॥ इति ॥

अत एवादित्यान्तःपुरुषस्य (१) हिरण्यश्मश्रु हिरण्यकेश-मित्यादिप्रतिपादितस्यैव परमात्मनः सर्व्वोत्कृष्टस्य स्तुतिपराः श्रुतयः कथमादित्यं नित्यं वर्णयन्ति। ज्योतिःशास्त्रे तद-नित्यता वर्णिता।

सृष्टिः सरोजासनवासरादौ
वियच्चराणां विलयस्तदन्ते।
आद्यन्तकालः स च कल्प उक्तः
कल्पद्वयं स्याद्दिवसो विरिञ्चेः ॥ इति ॥

वियत्याकाशे चरन्तीति वियच्चराः ग्रहाः सूर्य्यादयः तेषां सरोजासनस्य ब्रह्मणो वासरादौ दिनादौ सृष्टिरुत्पत्तिः तदन्ते दिनान्ते विलयः एवमाद्यन्तकल्पः सहस्रयुगप्रमाणः विरिञ्चे-श्चतुर्मुखस्य (२) दिनं दिवाकालः रात्रिरपि तादृशी कल्प-द्वयमितो ब्रह्मदिवस इत्यर्थः एवं ब्रह्म दिनकर्त्तुः सूर्य्यात् (३) ब्रह्माद्युत्पत्तिर्भवदुक्ता तस्मादेव विदितो भवदभिकारः। ब्रह्मायुःशताब्दमध्ये एकस्मिन् दिने जन्मादिवृत्तिं (४) प्राप्तस्य

१ अत एवान्तः पुरुषस्य। वा. पु.।
२ विरिञ्चिश्चतुर्मुखस्तस्येति। वा. पु.। का. पु.। स. पु.।
३ एवं ब्रह्मणः सूर्य्यजनकत्वं सूर्य्यात्। वा. पु.।
४ जन्मनिवृत्तिं। ते. पु.।

सूर्य्यस्य ब्रह्मपुरुषशब्दवाच्यत्वं भवता सम्पादितं किमु वक्तव्यं भवद्विद्याविषद्यं। सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपादित्यादिना भगवतो विश्वरूपत्वं प्रदर्शितं नित्यस्य परमात्मनो लोकवहिरन्तर्गतस्य यद् यद्विशेषणमुक्तं तत्तत् सूर्य्यस्येति भ्रान्तो वक्ति सूर्य्यगतः परमात्मा सूर्य्यमण्डलवहिरन्तःस्थित एव तद्द्वारा तमोनिर्हरणं स एव करोति। जगदीश्वरादन्यस्य तादृग्विधशक्त्यभावात् सूर्य्यादन्यः (१) देवमनुष्यतिर्य्यग्जन्तुष्वपि परमात्मा नेत्रान्तर्गतः सन् वर्त्ततएव दीप्तिः तद्रूपत्वात् य एषोऽक्षिणि पुरुषो दृश्यते यश्चासावादित्ये स एक इति श्रुतेश्च एकोऽप्यात्मा सर्व्वजगदन्तर्गतः। प्रतिपादितञ्चैतत् श्रीँ अन्तस्तद्धर्मोपदेशादिति व्याससूत्रेऽस्माभिः। तस्मात्तच्चिह्नधारणं (२) पाषण्डोद्बोधकं त्यक्त्वा स्मार्त्ताचारपरिलब्धशुद्धाद्वैतविद्यावलम्बिनो भवथ। एवमाज्ञप्ता दिवाकरादयः सौराः परमगुरुं नत्वा तत्कटाक्षलब्धशुद्धाद्वैतवादिनः शिष्या बभूवुः।

इत्यनन्तानन्दगिरिकृतौ सौरमतनिवर्हणं नाम त्रयोदशं प्रकरणं॥ * ॥

---

१ सूर्य्यादन्यद्देव। वा. पु.। सर्य्यादन्यदेव का. पु.। स. पु.। तै. पु.।

२ सर्व्वजगद्वहिरन्तर्गतः श्रीँ अन्तस्तद्धर्मोपदेशादिति सूत्रस्य तदधिकरणे श्रीमच्छङ्कराचार्य्यकृते ब्रह्मपरमेव चैतद वाक्यमिति तस्मात् सर्व्वगते ब्रह्मण्यावर्त्तय भानुमतविजृम्भणां त्यज तच्चिह्न धारणं। वा. पु.।

# शङ्कर विजये

## चतुर्द्दशं प्रकरणं ।

---

ततस्तत्र गतैर्विप्रैः सर्व्वैरपि यतीश्वरः ।
समाश्रितो ययौ तस्माद्वायोराशां जयेच्छया ॥ (१)
शिष्येषु त्रिसहस्रेषु केचिच्छङ्खप्रपूरणैः ।
केचिद्वाद्यविशेषैश्च केचित्तालैः शुभोक्तिभिः ॥ (२)
केचिद्घण्टानिनादैश्च कर्प्पूरदीपैश्च केचन ।
केचिद्व्यजनवातैश्च पिच्छवातैस्तथापरे ॥
समर्च्चयन्ति संन्यस्तसुखदुःखं यतीश्वरं । (३)
[illegible]गता विप्रा दृष्ट्वा तच्छिष्यतां गताः ॥
एवं प्रतिदिनं गत्वा तत्र तत्र गतान् द्विजान् ।
कुमतस्थान् परानन्दभाजः कृत्वा शुभोक्तिभिः ॥
पुरङ्गणवरं प्राप गणपस्याश्रमं शुभम् ।
तत्र नद्यां हि कौमुद्यां स्नात्वा विघ्नेशमव्ययम् ॥

---

१ समानीतो ययौ तस्मात् वायोराशां जलेशयादिति । वा. पु. ।

२ सुखोक्तिभिः । तै. पु. ।

३ सन्त्यक्तसुखदुःख यतीश्वरमिति क्वचित ।

संपूज्य यतिराड् तत्र मासमास सहानुगैः।
पद्मपादमुखाः शिष्याः पञ्चपूजापरायणाः॥
दिग्गजा इति विख्याताः परविद्याप्रभेदिनः।
परपक्षहरोद्युक्तवचसः प्रौढ़वादिनः॥
तद्वाक्यं शिरसा धृत्वा शिष्योऽन्यः पुरजिद्दलः। (१)
नियन्ता सर्व्वशिष्याणां पाकादिषु च कर्म्मसु॥
समर्च्य च गुरुं भिक्षां दत्वा तस्मै परात्मने।
पद्मपादस्तदन्येषां शिष्याणां षड्भिर्युतं॥
अददद्भोजनं नित्यं ब्रह्मार्पणमिति स्मरन्।

सायन्तने सर्व्वशिष्याः परमगुरुमाचार्य्यशिरोमणिं द्वादशवारं प्रदक्षिणनमस्कारान् कृत्वा बहुधा स्तुत्वा कृताञ्जलिकराः परमेवं स्तुवन्तो नृत्यन्ति परिपूर्णोऽहं ब्रह्म सत्यं सत्सुखरूप चिदानन्दोऽहं शुक्तौ रजतवदाभातीदं मयि (२) विश्वं निश्चिनु मिथ्येति स्थूलकारणलिङ्गदेहैः आकाशादिवदस्पृष्टोऽहं (३) तादृङ्मयि बन्धः को वा दारादिर्नाम भविष्यति तत् अम्भःकणजालैरस्पृष्टं तामरसकुदमिव न स्म भवं मत्तो जाता प्रकृतिरनन्ता तद्गर्भान्महदुद्भूतं हि तस्माज्जातोऽहङ्काराख्यस्त्रिगुणयुतोऽभवत्तस्माज्जाताः रुद्रो विष्णुर्ब्रह्मा तेभ्यः सृष्टिस्थितिलयमभव-

१ पुरजिद्वलिरिति। का. पु.। स. पु.। पुरजिद्दलमिति। वा. पु.। पुरजद्दलमिति क्वचित्।

२ मयीत्यस्याभावः। वा. पु.।

३ देहैः कालत्रयेऽप्यस्पृष्टोऽहं। वा. पु.।

न्नितरां कार्य्यार्थिभिरेतैः कृतमपि तद्धृदयगतोऽहं साक्षी परमः सर्व्वत्राऽहं वहिरन्तःस्थः सम्यक्ज्ञानफलप्रद एव सत्यं ज्ञानमनन्तं ब्रह्म सर्व्वथा सर्व्वमयोऽहं सर्व्वातीतः सर्व्वव्यापी कारणमेकः भानुमण्डलमध्यवर्त्तिपुरुषः साक्षी गतपरमद्वन्द्वोऽहं ईशो नित्यः शाश्वतविभवः सर्व्वमुक्तिदः सदुपासवतां सन्त्येवैते वेदा मन्त्रा मामद्वैतमजं न वदन्ति किं मनसाऽहं स्पृष्टः किम्वा करणै-र्दूरतरैरपि वेद्यः आत्मा ब्रह्म सदद्वयमेकः सच्चित्सुखरूपोऽहं सकलं मामिति ये मनुजा विदन्ति मायामेतां हि तरन्ति ते नित्यं मां निगमैर्मार्ग्यैर्वेद्यं सत्यं मनसा धारयन्ति हि ये मुक्ति-स्तेषामनुतुलिता स्याद्भक्तिमतां किमसाध्यं लोके मम सच्चित्-प्रदमद्भुतरूपं ममममि गोत्वपि गुरुमद्वैतं यमनियमादिभुतः स्मरति हि चेत् सममखिलात्मा समुपास्यः स्यात् नृत्यन्तो जल्पन्त-श्चैवं सत्यगुरुमभि नत्वा बहुधा शान्ता गुरुसन्निधिविश्रान्ताः दान्ताः पद्मपादाद्याः शिष्याः एवं प्रतिदिनमात्रं प्राप्ताः श्रीशङ्करगुरुपदगतचित्ताः । (१)

५ तादृक्स्वपुषः को वा शरीरादिर्नाम भविष्यति रज्जुजालैरुद-कमिवाकल्मोऽविद्यया देह्यद्भमभवं मत्तो जातोऽनन्तान्मच्छानुकृतं जगन्मूलं तस्माज्जातोऽहङ्काराख्यः त्रिगुणयुतोऽभवत्तस्मात् ब्रह्मा विष्णुर्ब्रह्मा तेभ्यः सृष्टिस्थितिलया अभवन्नितरां कार्य्यार्थिभिरेतैः कृतमेतन्नाशभावाक्षं साक्षी परमः सर्व्वत्राहम्बहिरन्तःस्थः सम्यक् ज्ञानफलप्रदं मामेवाहुः पुराणज्ञाः सत्यं ज्ञानमनन्तं ब्रह्म सर्व्वाधारः सर्व्वमयोऽहं सर्व्वातीतः सर्व्वव्यापीः कारणमेकश्चिदानन्दः भानु

इत्यनन्तानन्दगिरिकृतौ गुरुस्तुतिर्नाम प्रकरणं चतुर्द्दशं ॥ * ॥

---

मण्डलमध्यवर्त्ती पुरुषादितिजातः परमानन्दोऽहं ईशोनित्यः पुरुषः शाश्वतविभवः सर्व्वमुक्तिदश्च सन्त्येवैते वेदा मामद्वैतमजं न विन्दन्ति किं मनसाऽहं स्पृष्टः किम्वा करणैः दूरतरं वेदाः आत्मा ब्रह्मपदद्वयमेकः सच्चित्सुखरूपोऽहं सकलं मामिति ये मनुजा विदन्ति मायामेतां तरन्ति ते नित्यं मां ये निगमावेद्यं ये सत्यं मनसा ध्यायन्ति तेषां मत्या तुलिता स्यात् मक्तिस्तेषां किमसाध्यं लोके मम सच्चिन्मदमद्भुतरूपं सममखिलेष्वपि गुरुमद्वैतं यमनियमादियुतः स्मरति चेत् मामखिलात्मानं न सम्बन्धभाक् स्यात् नृत्यन्तो जल्पन्तः सत्यं गुरुमाश्रिता बहुधा श्रान्ता गुरुसन्निहिताः शान्ताः दान्ताः पद्मपादाद्याः शिष्याः एवं कतिदिनभावं प्राप्ताः श्रीशङ्करगुरुमुदं चिताः सर्व्वे ॥ इत्यनन्तेत्यादि असमीचीनं पाठान्तरमेतत्। वा. पु.।

## पञ्चदशं प्रकरणं ।

—————०*०—————

एवमानन्दसन्तुष्टमाचार्य्यं सेवकानपि ।
तत्पद्दनद्विजाः प्रेक्ष्य किमेतदिति चाब्रुवन् ॥ (१
न हि युष्मन्मतं सम्यगिव भाति हि पश्यताम् ।
आकाशवन्निरालम्बमद्वयं ब्रह्म केवलम् ॥
मनोवागादिवृत्तीनामगोचरतरं परम् ।
कथमज्ञोपबोधाय योग्यं स्यान्मतमीदृशं ॥
तत्त्यक्तास्मन्मतं सम्यगाचरन्तु शुभाप्तये ।
गाणपत्यमितिख्यातं षड्भिर्भेदैर्विजृम्भितं ॥ (२)
समस्तवेदतात्पर्य्यैस्तदेव हि समीरितम् ।
तदाचरध्वमत्यन्तशान्तिदं मोचदं नृणाम् ॥
तुण्डैकदन्तचिह्नाभ्यां चिह्नितं शक्तिसंयुतम् ।
महागणपतिं यस्तु सदा ध्यायत्यनन्यधीः ॥

---

१ तत्पदं न द्विजाः प्रेक्ष्य किमेतदितिचाब्रुवन् । स. चु. पु. । द्विजाः संप्रेक्ष्य बहूधेत्यादि वा. पु. । तत्पत्तनद्विजाः इत्यादि कचिच्च ।

२ षड्भिर्भेदैर्विवर्जितं । वा. पु. । षड्भेदैश्च विराजितं । स. चु. पु. ।

तन्मूलमन्त्रपठन-परः सन् ब्राह्मणोत्तमः ।
यो वर्त्तते स एवात्र मोक्षभाग्भवति ध्रुवं ॥ इति ॥

तद्ध्यानन्तु,

वीजापूरगदेक्षुकार्म्मुकलसच्चक्राब्जपाशोत्पल-
व्रीह्यग्रस्वविषाणकाञ्चनघटोद्भासत्कराम्भोरुहः ।
ध्येयो वल्लभया च पद्मकरया श्लिष्टोज्ज्वलद्भूषया
विश्वोत्पत्तिविपत्तिसंस्थितिकरो विघ्नो विशिष्टार्थदः ॥ इति

विश्वोत्पत्तिविपत्तिसंस्थितिकर इत्यनेन सृष्ट्यादि हेतुत्वं गणेशस्य घटते । ब्रह्मादिलयेऽपि एकस्यैव गणपतेर्विद्यमानत्वात् । गणानां रुद्रविष्णुब्रह्मगणानां पतिः स एक एव प्रथम आसीत् । अहमेक एव गणपतिरासमिति श्रुतेः तस्माद्गणपतिरेव सर्व्वातीतः परमात्मा तन्मायारचिता ब्रह्मादय इति प्राप्ते आहुः श्रीमदाचार्य्याः । (१)

भो गाणपत्य सत्यमुक्तं भवता गणपतेः सर्व्वोत्तमत्वं, तन्मायावलाद्रुद्रादुत्पत्तिश्चेति भवद्भिः प्रतिपादितं किल तदसमञ्जसमिव प्रतिभाति (२) कथं सगुणस्य गजमुखस्य गणपतेः रुद्रगणैः सह लयानुगस्य जगत्कारणत्वं कल्पयितुमुचितं । किञ्च रुद्रसुत इति लोके प्रसिद्धिरस्ति तस्य ब्रह्मत्वे कल्पिते पित्रा-

१ श्रुतेः । अतो गणपतेः सर्व्वातीतस्य परमात्मन एव जगत्कारणत्वं सिद्धं तन्मायारचिता ब्रह्मादय इति अत एव तस्य गणपतित्वं एवं पठन्तं गाणपत्यमिदमाह श्रीमदाचार्य्यः । वा पु ।

२ प्रतिपादितं तदसमञ्जसं विप्रतिभाति । वा, पु ।

दिकारणत्वं सुतस्यानुचितमेव अतो रुद्रादिकारणं परब्रह्मैव । सदेव सोम्येदमग्र आसीत् । ब्रह्म वा इदमग्र आसीदित्यादिवाक्यादहमेक एव गणपतिनामामिति वाक्यस्यार्थ उन्नेयः तस्य विश्वोत्पत्तिस्थितिसंहारकत्वं सिद्धं भवतीति निराकृते महागणपतिमते पुनराह स्वामिन् सर्व्वज्ञ भवदनुकूलं भवद्भिरुक्तं अङ्काभावः पुरुषः निरावलम्ब एव भवति तस्यापि देवस्याभिमानाभावात् । अतः साङ्केन पुंसा भवितव्यं । यस्याङ्कं धारयति पुरुषः तस्याभिमानं तस्मिन् वर्त्तते प्रायेणापि तद्गणस्तल्लोको गृह्यते अतः सालोक्यस्य मुक्तिरूपत्वात्तत्प्राप्तिर्निरङ्कस्य कथं भविष्यति मम गिरिजापुत्रस्य महीयानां (१) गणनाथगणपत्यादीनां चेति जल्पन्तं गिरिजापुत्राभिधं महागाणपत्यवरं श्रीमदाचार्य्य इदमाह ।

शृणु जड़मते गिरिजापुत्र ब्राह्मणस्य किमङ्कं वक्तव्यं प्रथमं ब्रह्मकुलजन्मलक्षणमङ्कं द्वितीयं पुंसवनादिवेदोक्तकर्माङ्कं तृतीयं ब्रह्मचर्य्याद्याश्रमाङ्कं । एवमङ्कत्रयविराजमानस्य सद्ब्राह्मणस्य निरङ्कता कथं ब्राह्मणाङ्केन सममन्याङ्कं न विद्यते । ब्राह्मणकर्त्तव्येषु स्नानाचमनप्राणायाममार्ज्जनगायत्रीजपाग्निहोत्रवेदाभ्यासेश्वरपूजादिषु वेदोक्तसत्कर्मसु किं न देवा विद्यन्ते सर्व्वदेवतास्पदस्य ब्राह्मणस्य देवाङ्कं कथं न विद्यते तादृग्विधाङ्केन वर्त्तमाने पुनरङ्कधारणं पशोरिव चिह्नं भवति ।

किञ्च ब्राह्मणस्य किं वा लक्षणमित्युक्ते शिखायज्ञोपवीत-

१ मदीयानामिति । स. पु. । मह्यीयानामिति । वा. प. ।

धारणवेदोक्तकर्म्माचरणं लक्षणं तर्हि तत्तच्छिष्येऽपि विद्यमानत्वात् तत्रातिव्याप्तिरित्युक्ते ब्रह्मकुलजत्वं विशेषलक्षणं। एतन्मात्रेणैव ब्राह्मणस्य चारितार्थ्यात् अङ्कधारणं पाषण्डताजनकं परिहर अङ्काङ्गीकारे महापातकमस्तीति पुराणश्रवणात् वेदविरुद्धत्वाच्च। किञ्च त्वदुपासकानां मूलाधारस्वाधिष्ठानमणिपूरकानाहतविशुद्धाज्ञासहस्रारेषु चतुर्द्दलषड्दलदशदलद्वादशदलषोड़शदलद्विदलसहस्रदलेषु मार्गविद्रुगनीलपिङ्गलधूम्रतेजःकर्पूरवर्णेषु स्थिता गणपतिब्रह्मविष्णुरुद्रजीवात्मपरमात्मानः तदुपरि श्रीपरमगुरुरिति स्वतन्त्रदेवताः सप्तृति देहधारिणः अतो गणपतेर्मूलाधारगतस्य सर्व्वाधारकर्त्तृत्वं वर्त्तते। तदुपरिगतानां चक्राणां तदधिकारिणां ब्रह्मादिदेवतानां च तदाधारकत्वादतस्तथाविधे गणपताविन्तस्थे तुण्डदन्तचिह्नं भुजयोः कर्त्तव्यमिति निरर्थकं।

किञ्च मूलाधारस्थे गणपतौ सर्व्वोत्तमे परमात्मनि सम्यगाज्ञाचक्रगते अनयोरधिकारे भवन्मते विशेषत्वं चिन्तय द्विसप्ततिसहस्रनाड़ीनां मूलाधाराचितानां नियामकत्वमात्रं गणपतेरधिकारः। तज्जनितनाड़ीभिरूर्द्ध्वाधःप्रसृताभिर्देहस्थितिकारणभूताभिरस्य चिचाधारभूताभिर्गणपतेः कारणत्वं प्राप्तं परमात्मा सर्व्वगतोऽप्याज्ञाचक्रवासी भूत्वा स्वाधस्थजीवरुद्रविष्णुब्रह्मगणपतीन् तत्तद्विनियोगेषु प्रेरयित्वा स्वयं साक्षी निर्गुणः सच्चिदानन्दमयः सर्व्वातीतः सर्व्वोत्कृष्ट इति सम्यग्वेदेषु प्रतिपादितः। अतः परमात्मानमाज्ञाचक्रगतं चिन्तय

भक्तो भवसीत्युपदिष्टः गिरिजापुत्रः सगणः त्यक्तलिङ्गः परम गुरोः शिष्योऽभवत् ।

पञ्चपूजापरो नित्यं पञ्चयज्ञपरायणः ।
गुरुशुश्रूषणासक्तः समभूद्गिरिजासुतः ॥

इत्यनन्तानन्दगिरिकृतौ महागणपतिमतनिवर्हणं नाम पञ्चदशं प्रकरणं ॥ * ॥

## षोड़शं प्रकरणं ।

———०*०———

एवं निरस्ते महागणपतिवादिनि गिरिजापुत्रे पुनरन्यो हरिद्रागणपतिमतवादी मत्यवतिष्ठते मन्त्रवर्णात्। स आह। स्वामिन्मदीयं मतं शृणु। हरिद्रागणपतिरेव सर्व्वजगत्कारणं। न च तत्त्वे प्रमाणाभावः श्रुतेरेव प्रमाणत्वात्। तथाहि।

गणानां त्वा गणपतिं हवामहे
कविं कवीनामुपमश्रवस्तमं।
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पतिम्
आ नः शृण्वन्नूतिभिः सीद साधनं॥ इति। (१)

भो यतिवर्य्य गाणपत्यमतमयुक्तमिति प्रतिपाद्य चिरकालारभ्य रूढ़मतपदविनं गिरिजापुत्रं तदाश्रितांश्च भ्रष्टान् कृत्वा वर्त्तसे (२) किमिदमुचितं तर्हि इदानीमागतं प्रतिपक्षविग्रहढुण्ढिराज-गणपतिकुमारनामानं मां विद्धि। किं गणेशमते न्यूनताऽस्ति तत्प्रतिपादकमन्त्रस्यायमर्थः। गणानां रुद्रविष्णुब्रह्मेन्द्रादि-गणानां गणपतिमध्यक्षं त्वां हवामहे ध्यानं कुर्म्महे। किं वि-शिष्टं कवीनां भृगुगुरुशेषप्रभृतीनां कविमुपदेष्टारमित्यर्थः। पुनः कीदृशं उपमश्रवस्तमं उपमश्रवसां सकलश्रवणसर्व्व-विद्याविदां मध्ये तममत्यन्तं श्रेष्ठं। पुनः कीदृशं ब्रह्मणां प्रपञ्च

---

१ सादनमिति सर्व्वत्रपाठः।

२ वदसि। वा. पु.।

कर्त्तृणां ज्येष्ठराजं तद्द्वारा ज्येष्ठप्रभुमित्यर्थः ब्रह्मादिभिरपि सृष्ट्यादिषु विघ्नेशः पूजनीय इत्यर्थः । आरम्भितकार्य्येषु सर्व्वेष्वपि देवमनुष्यादिभिः सर्व्वैर्विघ्नेशः पूजनीय इति पुराणेषु च बहुधा वर्त्तते तं ब्रह्मणस्पतिं ब्रह्मणामपि पतिमित्यर्थः । आ नः आ समन्तात् नः नुतिभिः स्तोत्रैः शृण्वन् सा निर्व्विघ्नं शुभं सीद ददात्वित्यर्थः । अतः सकलदेवपूज्यो गणपतिरेव । ध्यानन्तु ।

पीताम्बरधरं देवं पीतयज्ञोपवीतिनं ।
चतुर्भुजं त्रिनयनं हरिद्रालसदाननं ॥
पाशाङ्कुशधरं देवं दण्डाभयकराम्बुजम् ।
एवं यः पूजयेद्देवं स मुक्तो नात्र संशयः ॥ इति ॥

स्कन्दपुराणवचनात् । जगदादिकारणं गणपतिरेक एव तत्कटाक्षाज्जाताः तदंशभूताः सर्वे ब्रह्मादयः अतः सर्वेदेवपितामहं विघ्नेशं भवन्तोपि भजन्तु । तस्य विक्रयन्तु ... तदाकारतप्तलोहाङ्कितभुजद्वयस्तद्भक्तायगणस्तस्यैव मुक्तिः ... भवतीति पूर्व्वपक्षे प्राप्ते श्रीमद्गिराचार्य्यैरिदमुच्यते ।

किं गणकुमार भवद्बुद्धिवैकल्यमप्रतिहतं जगत्कारणवाक्यैः, सदेव सौम्येदमग्र आसीदित्यादिभिः प्रतिपादितं ब्रह्मैव गणपतिरिति तस्यांशा ब्रह्मादयः सृष्ट्यादिकर्त्तार इति भवादीनामपि सर्व्वविद्यागुरुर्गणपतिरिति च प्रसङ्गात किञ्चिदन्यच्च सम्यक् प्रतिपादितं भवता । शुद्धबुद्धमुक्तस्वरूपं सत्यं ज्ञानमनन्तं ब्रह्म गणपतिरेवास्तु सर्व्ववाच्यस्य ब्रह्मणः

गणपतिशब्देन किमपराद्धं। अतः परमात्मनः सकाशात् ब्रह्मादयो जाता इत्यविरुद्धं। ब्रह्मादीनां तदंशसम्भूतत्वात् रुद्र-पुत्रो गणपतिरिति तत्राप्यविरोधः। अंशांशिनोरभेदात् अतो देवकार्य्यार्थो (१) जगन्निर्म्माणादिषु विघ्नहर्त्तेत्यर्थः। संसारिणा-मपि सर्व्वविघ्ननिवृत्तये तादृग्गणपतिरुपास्य एव। अतः सर्वैर्मु-मुक्षुभिरीशविष्णुगणपतिशक्तिसूर्य्याः पञ्च तत्तत्पुरुषबुद्धि-भेदेनांशांशिभावमापन्ना उपास्या एव। किन्तु तुण्डैकदन्तचिह्न-धारणमात्रमेव विरुद्धं लिङ्गिनः पाषण्डत्वश्रवणाद्वेदविरो-धाच्च। तस्मात्तुण्डैकदन्तचिह्नं परित्यज्य शूद्राद्वैतवृत्तिमा-श्रित्य पञ्चपूजां स्नानादिनित्यकर्म्म च कुर्वन् मायानिवृत्तौ जातायां तद्द्वारा भग्नलिङ्गशरीरः सन् मुक्तो (२) भवसीत्येव-मुपदिष्टो गणकुमारस्तथाङ्गीकृत्य गुरुवरं (३) ध्यायन् पञ्च-पूजापरायणः सुखमाप।

इत्यनन्तानन्दगिरिकृतौ गाणपत्यैकदेशिमतनिवर्त्तनं नाम षोड़शं प्रकरणम् ॥ * ॥

---

१ देवतार्थौ। वा. पु.।

२ तद्द्वाराद्भग्नलिङ्गशरीराद्विमुक्तः त्वं। वा. पु.।

३ गणकुमारो धृतत्रिपुण्ड्रः सद्गुरुवरं। वा. पु.।

# शङ्करविजये

## सप्तदशं प्रकरणं।

———०*०———

एवं परिहृते गाणपत्यैकदेशिमते (१) पुनरन्यः उच्छिष्टगणपत्युपासकः दक्षिणेतरमार्गानुवर्त्ती हेरम्बसुत इति प्रसिद्धः प्रत्यवतिष्ठते। स तु श्रीमदाचार्य्यमिदमुवाच। भोः स्वामिन् हेरम्बसुतोऽहमागतोऽस्मि केन विधिना गणपतिमतमयुक्तमिति श्रीमद्भिर्भवद्भिरुक्तं। श्रूयतामस्मन्मतं शैवागमे द्वादशगणपतिप्रकरणे महागणपतिमतमेकं हरिद्रागणपतिमतमेकं उच्छिष्टगणपतिमतमेकं नवनीतगणपतिमतमेकं स्व[illegible]गणपतिमतमेकं सन्तानगणपतिमतमेकं एवं षड्विधगणपतिमतानि भवन्ति। एते मतप्रवर्त्तकाः षण्महामन्त्राः उपमन्त्रषट्कञ्च तत्तन्मतावान्तराणि ज्ञानमतानि वामावलम्बकानि। उच्छिष्टगणपतेर्मतस्य ज्ञानमतं हैरम्बमित्युच्यते। उभयोरपि प्रधानाङ्गयोर्वाममार्गावलम्बकत्वेनोच्छिष्टगणपतिरिति नाम प्राप्तं। तदीयध्यानन्तु।

चतुर्भुजं त्रिनयनं पाशाङ्कुशगदाभयं।

---

१ गणपतिमतैकदेशिनि। वा. पु.।

तुण्डाग्रपीतमधुकं (१) गणनाथमहं भजे॥ इति॥

तदङ्गहेरम्बस्य तु ध्यानमेतत्।

महापीठनिषण्णं वामाङ्कोपरि (२) संस्थितां।
देवीमालिङ्ग्य चुम्बन्तं स्पृशन्तुण्डेन वै भगं॥ इति॥

अत एव तयोरङ्गाङ्गिनोर्वामबाहुल्यवशात् जीवेशयोरिवैक्यानुसन्धानं युक्तमिति मतद्वयमप्यहमवलम्ब्य कुङ्कुमाङ्कितललाटः पुण्ड्रान्तरपरित्यागी सन्ध्यादिसर्व्वकर्म्माणि इच्छावशगानि कृत्वा सम्वित्तीर्थपानजनितानन्दविदितसकललोकः(३) एतत्समम्मतान्तरं नास्तीति नित्यहृष्टोऽभवं।

किञ्च मदीयाचारे धर्म्मद्वयमेवानुवर्त्तनीयं। पुरुषाणां सार्व्वजातिकानां एकजातिवदित्येको धर्म्मः, स्त्रीणां सार्व्ववर्णिकानां एकजातिवदित्येको धर्म्मः, तेषां तासाञ्च संयोगे वियोगे च दोषाभावः। अस्या अयमेव पतिरिति नियामकाभावात्। तासु रजःसिक्तादौ सुसम्पर्के (४) जाते रुधिरबाहुल्यात् आनन्दाधिक्याच (सर्व्वे वर्णाः समानजातयः दाम्पत्यव्यवस्था नास्ति। येन केनापि पुरुषेण स्वस्वहेरम्बतां विभाव्य यां काञ्चित्स्त्रियन्तच्छक्तिं विचिन्त्य सुरयेन सम्भोगः कार्य्यः इत्यधिकः

---

१ तुण्डाग्रनीतमधुकं। वा. पु.।

२ वामाङ्कोपरि। वा. पु.।

३ सम्यगरहनजनितानन्दविदित सकलालोकः। वा. पु.। का. पु.। स. पु.।

४ रजःसिक्तासु सम्पर्के। वा. पु.।

क्वचित् ।) आनन्दप्राप्तिरेव ब्रह्मप्राप्तिरिति तस्य सच्चिदानन्दलक्षणाच्च। तस्मादुच्छिष्टगणपतेरखण्डानन्दरूपत्वेन ब्रह्मरूपत्वेन च तन्मतमनन्यभेद्यं। तदंशाः सर्व्वे ब्रह्मादयो देवाः, ... -श्विनोरभेदः प्रतिपादितो रुद्रकाण्डे। नमकेपि, नमो गणेभ्यो गणपतिभ्यश्च वो नमो नम इति। गणरूपेभ्यो गणपतिरूपेभ्यश्च रुद्रेभ्यो नम इत्यनेन (१) गणत्वं गणपतित्वञ्च एकस्मिन् रुद्रे घटते ओँकारातीतस्य परमशिवस्य गणपतिरूपत्वेन तदंशाः सर्व्वे देवा इतियुक्तं। अतो ब्रह्मप्राप्तये कर्म्मणो कारणत्वात् प्रवृत्तिर्व्यर्थैव।

किञ्च न कर्म्म मुक्तिसाधनं किन्तु कर्म्मत्याग एव। न कर्म्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुरिति श्रुतेः। त्यागः सन्न्यासः स तु द्वन्द्वातीतः शान्तो दान्तः उपरतस्तितिक्षुः स... -हितः श्रद्धायुक्तो भूत्वात्मन्येवात्मानमनुपश्येदिति श्रुतेः। उ... -तिः सन्न्यासः। तितिक्षा शीतोष्णद्वन्द्वसहनं एतदुपलक्षणं सुखदुःखमानापमानपुण्यपापादिष्वपि (२) द्वन्द्वता योजनीया। द्वन्द्वातीतवृत्तेः मोक्षहेतुत्वे तत्तद्वृत्त्यवलम्बनस्य उच्छिष्टगणपतिमतानुकूलत्वात्तन्मतं मुमुक्षुभिः सर्व्वैरुपासनीयमिति प्राप्ते श्रीमदाचार्य्यैरुच्यते।

भो हेरम्बसुत भवन्मतमनुचितं। वेदविरोधसद्भावात्। वेदो हि ब्राह्मणादीनामुचितधर्मानुक्त्वा पश्चान्महदाप-

---

१ इत्यन्तेन। वा. पु.।

२ सख्यसखिसमानासमान पुण्यपापादिष्वपि। वा. पु.।

द्यपि इदमग्राह्यमिति निषेधमाह । न सुरां पिवेत् न कलञ्जं भक्षयेत् न परदारां गच्छेत् नाग्नीनुद्वासयेदित्यादीनि बहूनि वचनानि सन्ति । तस्मादेतद्ग्राह्यमतस्य सुतरामयुक्तमेवाङ्गीकरणं मुमुक्षुभिरङ्गीकर्त्तव्यमिति भवदुक्तं तदपिन्यास एवेति अपरे च यदित्यादिना (१) त्यागेनैके अमृतत्वमानशुरित्यादिना श्रुत्यर्थेन सन्न्यासिन एव मोक्षाधिकारित्वमुक्तं भवतीति तस्य द्वन्द्वातीतत्वादिगुणविशिष्टत्वात् सुखदुःखमोहादिपरित्यक्तस्य महायतेः परमहंसस्य हक् यत्र यत्र पतति तत्र ब्रह्मस्वरूपनिश्चयात् सर्व्वं खल्विदं ब्रह्म नेह नानास्ति किञ्च नेति ब्रह्मव्यतिरेकेण प्रपञ्चासत्त्वामात्ररूपिणः शुद्धाद्वैतं ब्रह्माहमस्मीति महामार्गारूढ़स्य सर्व्वभूतान्तःकरणसाक्षिणः शुद्धचैतन्यस्य द्वन्द्वातीतत्वं युक्तमेव । तमुपमानं कृत्वा भवत्प्रमुखाः संसारिणः सुरां पिवामः कलञ्जं भक्षयामः प्रतारणबुद्धिरित्याजल्पथ तदत्यन्तदोष्टं नरकप्रदमेव मतं तस्माच्च मूढ़बुद्धिं परित्यज्य ब्रह्मसभानुग्रहात् कलितप्रायश्चित्ताः यूयं मुक्तिमार्गमवलम्ब्य पञ्चपूजापराः पञ्चयज्ञादिनित्यकर्मनिरताश्च कथं मूलाधारादिब्रह्मरन्ध्रान्तं प्रतिचक्रे गणपतिब्रह्मविष्णुरुद्रान् जीवपरमात्मगुरुसर्व्वदेवताः परिकल्प्य पञ्चपूजापुरःसरमजपामन्त्रजपपरास्तद्देवताध्यानमात्रेणैव मुक्ता भवथ नान्यद्विचारणीयं भवद्भिरित्युपदिष्टा हेरम्बसुतादयः तत्सभानुग्रहात् कृतप्रायश्चित्ताः

---

१ न्यासएव यदित्यादिना । वा. पु. ।

श्रीमत्परमगुरुं नत्वा तत्कटाक्षप्राप्तब्राह्मणधर्माः श्रुत्याचार परिश्रान्ता अद्वैतविद्याभ्यासतत्परा बभूवुः ।

इत्यनन्तानन्दगिरिकृतौ उच्छिष्टगणपतिमतनिवर्हणं नाम सप्तदशं प्रकरणं ॥ * ॥

## अष्टादशं प्रकरणं।

———०*०———

अतः परं नवनीतमग्नगणपत्युपासकाः समागत्य श्रीमदाचार्य्यस्वामिनमिदमूचुः। स्वामिन् वयं नवनीतादिगणपत्युपासकाः मदीयाचारस्तु वेदोक्तकर्मानुकूलेन (१) तत्तदुपासनां कुर्मः। किन्तु गणपतेरुत्तमत्वं सर्व्वेषां देवानां तदंशजातत्वं च निश्चित्य गणपतिमतसिद्धान्तमोक्षाभिलाषिणः सर्व्वं जगत् गणपतिरिति ध्यायिनो भवामः। न किल तत्र विवादः कर्त्तव्यः तस्य सर्व्वकार्य्येषु सर्व्वदेवपूज्यत्वात् आदौ पूज्यो गणाधिप इत्यादिप्रमाणसद्भावाच्च कथं भवद्भिर्महागणपत्यादिमतत्रयं निराकृतं तद्व्यतिरेकेण परमार्थिकाभावादिति। तत्तदुपासकैश्च तत्प्रीत्यर्थं हरिद्रादिधारणं कर्त्तव्यमेवेति प्राप्ते श्रीशङ्कराचार्य्यस्वामिभिरिदमुच्यते।

मतमिति यत्तदेवासत्। यूयं मूढाः पारमार्थिकावेदिनः सत्यं ज्ञानं शृण्वन्तु। प्रकृतिपुरुषाभ्यामादौ महत्तत्त्वे जाते तद्गर्भे अहङ्कारतत्त्वं गुणत्रयात्मकं उत्पन्नं तदेव रुद्रविष्णु-ब्रह्मरूपमभवत् ते क्रमात्स्वशक्तितस्तत्तद्गुणविशिष्टजगदुत्पत्ति-

१ वेदोक्तकर्मानुकूलत्वेन। का. पु.। स. पु.। तै. पु.।

हेतवोऽभवन् । तत्र किल तामसाहङ्कारे रुद्रसृष्ट्यन्तर्जाताः गणपतिकुमारभैरवाः ते जगति स्वल्पाधिकारिणः (१) गणपतेः सृष्ट्यादि प्रयोजनेषु (२) मनुष्यसाध्येषु सृष्ट्यादिप्रयोजनेषु ब्रह्मादिसाध्येषु च तत्तदादिपूज्यत्वं वर्त्तते तत्र सर्व्वकार्य्यनिर्व्विघ्नतासिद्धये कार्य्यादौ गणपतिः पूजनीयत्वेन स्थापितः लोके सार्वभौमेण तत्तत्कार्य्ये तत्तदधिकारिकल्पनावत् । अस्तु वा गणपतिरेव परमात्मा । अंशांशिनोरभेदात् (३) । तस्मात् (४) विप्रै र्गणपतिब्रह्मविष्णुरुद्रजीवपरमात्मानः (५) देहान्तर्गत मूलाधारादिचक्रे ष्वेवोपास्याः तादृगनुष्ठानाशक्तानां (६) ब्राह्मणानां गणेशेनोमाहरीशाः प्रतिमादिषु पञ्च पूज्याः सर्व्वथा प्रमाणरहितं हरिद्रादिचिह्नमसङ्गतमित्युपदिष्टाः वीरभद्रै कदन्तादयः नवनीतसम्मन्नानगणपत्युपासकाः परमगुरुं नत्वा परित्यज्य हरिद्रादिचिह्नानि पञ्चपूजापराः शुद्धाद्वैतविद्यावादिनः शिष्या (७) बभूवुः । (८)

---

१ स्वस्वाधिकारिणः । का. पु. । स. पु. ।

२ कृष्यादि प्रयोजनेषु । तै. पु. ।

३ तत्र सर्व्वकार्य्यनिर्व्विघ्नत्वेत्याद्यं शांशिनोरभेदादित्यन्तपाठासद्भावस्तैलङ्गपुस्तके ।

४ परन्तु । स. पु. ।

५ गणपत्यादयो । स. पु. । का. पु. ।

६ तदशक्तौ । स. पु. ।

७ तच्छिष्याः । तै. पु. ।

८ रुद्रसृष्ट्यन्तर्जातो गणपतिः कुमारो भैरवश्च ते जगति

इत्यनन्तानन्दगिरिकृतौ गणपतिमतत्रयनिवर्हणं नाम अष्टादशं प्रकरणं ॥ * ॥

---

स्वल्पाधिकारिणः गणपतेः सृष्ट्यादिप्रयोजनेषु मनुष्यसाध्येषु सृष्ट्यादिप्रयोजनेषु ब्रह्मादिसाध्येषु च तत्तदादिपूज्यत्वं वर्त्तते तस्मादिष्टैर्गणपतिब्रह्मविष्णुरुद्रजीवगुरुपरमात्मानः मूलाधारादि-चक्रेषु उपासनीयाः स्वदेहान्तस्थानि तद्वासुदेवरूपा-णि च परिकल्प्य पूजनीयानीत्यर्थः तादृगनुष्ठानासक्तानां ब्राह्म-णानां गणेशेनोमाहरीशाः पञ्च पूज्याः इति सम्यगुपदिष्टा वीर-भद्रैकदन्तादयः नवनीतस्वर्णसन्तानगणपत्युपासकाः परम-गुरुं नत्वा त्यक्तहरिद्रादिपुण्ड्रादिचिह्नाः पञ्चपूजापराः शुद्धा-द्वैतविद्यावादिनः शिष्या बभूवुः इति पाठान्तरं । वा. पु. ।

## ऊनविंशं प्रकरणं।

———०*०———

ततः श्रीशङ्कराचार्य्यः भवानीनगरं प्राप। (१) तामादित्यादि पादपद्मैर्विचित्रां (२) कुर्वन् पलाशोत्तमाङ्गार्चिताङ्घि तां सकलपूर्णरूपां सशिष्योऽभजत् सः। एवं सकलय गुरुः श्रीशङ्कराचार्य्यः समस्तशिष्याचरितपूजाङ्गीकारविलसत् कमलः सर्व्वदेवार्चितो गुरुरिव प्रकाशमानमूर्त्तिः तत्र मासक समतिष्ठत्। तत्रस्थाः परमगुरुं (३) यतिशिरोमणिं शिरोभि रभिवाद्य (४) सविनयम् इदमूचुः। स्वामिन्नस्मन्मतमति विचित्रतरं शृणु। भगवती (५) किल महाशम्भुशक्तिः प्रपञ्चमूल कारणं गुणातीतवृत्तिश्च (६) तन्मायावशात् महत्तत्त्वादि

१ ततः श्रीशङ्कराचार्य्यस्तुलाभवानीनगरं प्राप्य मासमतिष्ठत्। स. च. पु.।

२ पादपद्मैः पवित्रां। वा. पु.।

३ परमपुरुषं। तै. पु.।

४ शिरसाभिवाद्य। वा. पु.। स. पु.। का. पु.।

५ मतमपीतिकिञ्चित् भागवती। वा. पु.।

६ प्रपञ्चमूलकारणगुणातीतसवृत्तिश्च। वा. पु.।

दखिलमुत्पन्नं तद्द्वारा ब्रह्माद्युत्पत्तिस्तच्छक्त्युत्पत्तिश्च सिद्धा भवति तस्याः मनोवाग्वृत्त्यतीतत्वात् तदंशायाः भवान्याश्चरणारविन्दसेवापरासदङ्ककुङ्कुमादिधारिणस्तत्पादाकाराकारितस्वर्णपादवद्धगलवाहवो वयं जीवन्मुक्ता एव विद्योपासकानाञ्च फलश्रवणात् सैव च प्रकृतिः प्रधानमिति च व्यवह्रियते तदुक्तं सांख्यसिद्धान्ते।

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
षोड़षकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः॥ इति।

श्रुतिश्च

अजामेकां लोहित शुक्लकृष्णां बह्वीः प्रजाः सृजमानां नमामः इति। प्रकृतिपुरुषयोः शिवशक्त्योरग्निसूर्यचन्द्रिकान्यायेनाभेदः। तथा च श्रुतिः।

मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरमिति।

एतदुपासनस्यैव मुक्तिं श्रुतिराह। विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सहाविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुत इति। इयमेवैका मुमुक्षुभिरुपासनीया (१) तस्याः कटाक्षलेशेनैव मुक्तिदर्शनात् प्रकृतिश्चेश्वरश्चेत्यनेन श्रुतिवचसा प्रकृतिपुरुषयोरभेदात् सदेव सौम्येदमग्र आसीदित्यादि जगदुपादानकारणवाक्यानि प्रकृतिपराण्येव। अतः प्रकृत्युपासका इति (२) निरवद्यं किञ्च प्रणवनिष्ठावर्णादुवर्णादुत्पत्तिर्यथा तथैव तच्छ-

---

१ अत उमाख्यैव सर्वैर्मुमुक्षुभिरुपासनीया। तै. पु.।

२ प्रकृत्युपासका मक्ता इति। तै. पु.।

र्कीर्भवान्या लक्ष्म्यादिशक्त्युत्पत्तिः सिद्धैव । अतः सर्व्वदेवकारणस्य रुद्रस्य या शक्तिः चन्द्रचन्द्रिकान्यायेन तदुद्बोधरूपिणी स्वाधीनवल्लभेति प्रसिद्धा सैव भवानीति निश्चयज्ञानवतामस्माकं न कश्चिद्विचारः । परमपुरुषैर्भवद्भिरपि तदङ्गधारणपुरस्सरं सैवोपासनीयेति प्राप्ते श्रीमदाचार्य्यस्वामिन इदमाहुः ।

ननु भवदुक्ता भवानी संसारभयहारिणी जगत्कारणमिति परन्तु (१) पुरुषस्य श्रेष्ठत्वादीशज्ञानेनैव मुक्तिरिति सर्व्वत्रापि प्रतिपादितत्वाच्च । आत्मानमात्मना ध्यात्वा मुक्तो भवति नान्यथेतिमुक्तिवचनदर्शनात् (२) अजातीतस्य परमात्मन एव ज्ञानेन मुक्तिः । ब्रह्मविद्ब्रह्मैव भवतीति श्रुतेः । सांख्यसिद्धान्तेऽपि प्रकृत्यपेक्षया मायातीतस्य ज्ञानादेव मुक्तिः । तैत्तिरीयोपनिषदि अजास्वरूपमुक्त्वा तदितरत्वमीश्वरस्य दर्शितं ।

अजामेकां लोहितशुक्लकृष्णां
बह्वीं प्रजां जनयन्तीं सरूपां ।
अजो ह्येको जुषमाणोऽनुशेते
जहात्येनां भुक्तभोगामजोन्यः ॥ इति श्रुतेः ।

विद्ययाऽमृतमश्नुत इति विद्यापदार्थस्यात्मभिन्नं सर्व्वमनित्यमात्मैव च शुद्धबुद्धमुक्तसच्चिदानन्दरूप इति ज्ञानमेव । प्रकृतेरजात्वन्तु अनादिप्रवाहरूपेण स्वर्गादेरमृतत्ववदापेक्षिकम् । अन्यथा एकमेवाद्वितीयं ब्रह्मेतिश्रुतिविरोधापत्तेः । ज्ञानस्य

१ भयहारिण्येव तथापि । वा. पु. ।
२ मुक्तिदर्शनाच्च । वा. पु. । का. पु. ।

मोक्षसाधनत्वे मुक्तिदशायां न हि तत्सद्भावः शङ्कनीयः। यतः तत्त्वज्ञानमपि जले कतकरेणुवत् अविद्यामपहृत्य स्वयमपि नश्यतीति नाद्वितीयत्वविरोधः (१)। अतः परस्मिन्नद्वितीये ब्रह्मणि भवान्यास्तद्बोधकारणं घटते। अतो विद्याशब्दवाच्या भवानी तदुपासनेन चित्तशुद्धौ जातायां लिङ्गशरीरभङ्गद्वारा

---

१ परमात्मन एव ज्ञानेन मुक्तिः। तैत्तिरीयोपनिषदि अजा स्वरूपमुक्त्वा तदितरत्वमीश्वरस्य दर्शितं।

अजामेकां लोहितशुक्लकृष्णां
बह्वीप्रजां जनयन्तीं स्वरूपां।
अजो ह्येको जुषमाणोऽनुशेते
जहात्येनां भुक्तभोगामजोऽन्यः॥ इति

अतः परमात्मनः मायातीतस्याज्ञानान्मुक्तिः। किञ्च सांख्यैरपि पुरुषलक्षणमुक्तं।

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः। इति

प्रकृत्यपेक्षया भिन्नस्य परमात्मन एव ज्ञानान्मुक्तिरिति निरवद्यं। ज्ञानस्य मोक्षसाधनत्वेन मुक्तिदशायां न हि तत्सद्भवः शङ्कनीयः ईश्वरव्यतिरिक्तस्य सर्व्वस्यानित्यत्वात् किन्तु जीवनिष्ठमज्ञानं परिहृत्य स्वयं नष्टा भवति यथा जले कतकरेणुवत् कतकरेणुर्जलनिष्ठं पङ्कमपहृत्य स्वयमपि नष्टो भवति एवं विद्यावतां ब्रह्मैक्यमुक्तं। ब्रह्मविद्ब्रह्मैव भवतीति श्रुतेः।

वा. पु.।

२ तद्बोधकारं। तै. पु.।

मोक्षः सिद्धः। अतो भवानीभक्ता भवन्तोपि सर्व्वाणि सगुणो-पासनानि अल्पफलत्वात् परित्यज्य प्रमाणरहितं वेदविरुद्ध-कुङ्कुमपुण्ड्र-(१)-स्वर्णपादादिचिह्नानि परित्यज्य शुद्धाद्वैत-विद्यया (२) ब्रह्माहमस्मीति निश्चयज्ञानेन मुक्ता भवथ। एत-प्राप्तये भिदादिपशुमार्गौ न साधनमिति सम्यग् त्रिपुरकुमारविन्दुभक्तपूर्णानन्दपूर्णभगवच्चरणसेवकशुद्धमत्या भवानीभक्ताः परमगुरुं (३) यतिशिरोमणिं नत्वा त्यक्त-लिङ्गाः कृताञ्जलयः शुद्धाद्वैतद्दत्याश्रिताचाराः स्नानसन्ध्या-वन्दनपञ्चपूजादिनिरताः सच्छिष्या बभूवुः।

इत्यनन्तानन्दगिरिकृतौ शक्तिमतनिवर्हणं नामैकोनविंशं प्रकरणं ॥ * ॥

---

१ सगुणोपासनानि परित्यज्य कुङ्कुमपुण्ड्रेत्यादि। वा. पु.।

२ शुद्धाद्वैतविद्यायां। वा. पु.।

३ परमपुरुषं। वा. पु.।

## विंशं प्रकरणं।

—————०*०—————

अतः परं (१) तत्समीपदेशस्थाः कुवलयपुरादिपत्तनाश्रिताः समागत्य परमपुरुषमाचार्य्यस्वामिनं नत्वेदमूचुः (२) स्वामिन् महालक्ष्मीर्मातेव सर्व्वफलदा जगतां उत्पत्तिस्थितिलयकारणं भगवतो विष्णोः प्राणशक्तिः। तद्द्वारा पार्व्वतीवाण्यादिशक्तयश्च बहुधा उत्पन्ना। किञ्च त्रिमूर्त्तीनां मूलकारणमपि तच्छक्तिरपि सैवैका भगवत्येव परमपुरुषस्य सच्छब्दवाच्यस्य तत्कारणस्य प्रकृतेरसच्छब्दवाच्यत्वञ्च तैत्तिरीयोपनिषदि समाम्नातं। असद्वा इदमग्र आसीत् ततो वै सदजायत इति अतो मूलप्रकृतिः परमशक्तिः ब्रह्मादिप्रलये सर्व्वानपि संभक्ष्य गुणातीतवृत्त्या असद्रूपेणाग्रे आसीत् पुनः सृष्टिकाले तद्वशादेव ब्रह्मादयो जायन्त इति जगदुपादानकारणं सैवैकैव। तत्रापीश्वरो ऽस्तीति यदुच्यते तदन्तर्वर्त्त्येव

---

१ एवं श्रीमदाचार्य्यैः कृतं शक्तिमतनिरासं ज्ञात्वा वा. पु.। शक्तेति श्रुत्वा भवितुमुचितं।

२ नत्वा किञ्चेदमूचुः। वा. पु.।

सोपीति विचारय तदादीनां (१) तज्जन्यत्वात्। अतः परब्र-
ह्मण्यपि सविमर्शता कल्पनीया। तयोः सार्व्वकालिकनित्यत्वाच्च-
न्द्रचन्द्रिकान्यायेन च भवदभेदस्यापि विरुद्धत्वाभावात् परब्रह्म-
त्युपासनं भवद्भिरपि कर्त्तव्यं मुक्तिकाङ्क्षिभिरिति। अतः क-
मलायाः सर्व्वोत्कृष्टत्वात् तदुपासनं तच्चिह्नानां कमलपद्माक्षमाला-
कुङ्कुमानां भुजकण्ठतलादिषु धारणं कुर्म्मः भवद्भिरपि तथैवा-
नुष्ठेयं मुक्त्यर्थमिति (२) श्लिष्टभूषणगङ्गाकीर्त्तिलक्ष्मीविलास-
रमाभक्तादिभिः सर्व्वैर्विज्ञापितः श्रीशङ्कराचार्य्यगुरुरिदमाह।

अुतमद्भुतं भवद्भिः प्रतिपादितं मतं। भोः कमलाभक्ताः
भवन्मतं न सम्यगाभाति। यतः स ईशः सर्व्वानसृजत स आत्मा
तत्त्वमसि श्वेतकेतो सदेव सौम्येदमग्र आसीत्। यः सर्व्वज्ञः
सर्व्वविदित्यादिबहुश्रुतिप्रपञ्चसारो विचारितः परमात्मा अप-
हतपाप्मा सर्व्वातीतः सर्व्वकारणः सर्व्वाधारः सर्व्वमयः स
एकोऽद्वितीयः परानन्दमयः सदा वर्त्तते। तदिच्छारूपायां
प्रकृतेस्तदाधारत्वेन तस्मिन् परमात्मनि प्रकृति र्गुणमयी नि-
जाङ्गं परित्यज्य नष्टसर्व्वविकारा सद्रूपा समभवत्। पराधीन-
वृत्तिप्रत्यासत्तिशक्तेः स्वतन्त्रत्वलेशाभावात् कथं मुक्ता स्वस्य
मुक्त्यभावे कथं मुक्तिप्रदा भवति। विद्यारूपायास्तस्यास्तथावि-

१ सोपीति वियदादीनां। वा. पु.।

२ अतः कमलायाः सर्व्वोत्कृष्टत्वात् भक्तानां भुजद्वयोः कम-
लाङ्कधारिणां पद्माक्षमालापरिशोभितगलकण्ठानां कुङ्कुमा-
ङ्कितभक्तानां मुक्तिः करस्थेति। वा. पु.।

धममर्थतास्तीति चेत्। ज्ञानस्यापीश्वरजीवभिदारूपमलाज्ञान-निवृत्तिमात्रमेव सङ्घटते। अतो मुक्तिसमवायिकारणस्य विद्या-रूपस्यैव परमेश्वरत्वं वक्तुं न शक्यते। सर्व्वातीतं ब्रह्म प्रसिद्ध अहमस्मि ब्रह्माहमस्मीति यो वा ध्याता तस्यैव मुक्तिः। अन्ये-षामनित्योपासकानामनित्यलोकप्राप्तिः। क्षीणे पुण्ये पुनर्मर्त्त्यलो-कप्राप्तिरिति सिद्धं। अतो यूयं कमलकुङ्कुमगण्डाद्यङ्कं परिहृत्य शुद्धाद्वैतविद्यामाश्रित्य मुक्ता भवथ। इत्युपदिष्टास्ते परमगुरू नत्वा शुद्धाद्वैतविद्यानिरताः स्नानपञ्चपूजादिसत्कर्म्मिणः शिष्या बभूवुः।

इत्यनन्तानन्दगिरिकृतौ शक्तिमतैकदेशनिराकरणं नाम प्रकरणं विंशम ॥ * ॥

# शङ्कर विजये

## एकविंश प्रकरणं।

———०*०———

एवं निराकृतेषु दुर्गालक्ष्मीमतसिद्धान्तिषु पुनरन्ये पुस्तकपुण्ड्राः कमलपाणयः निगमसावित्रपरागमसुवागादयः शारदोपासकाः स्वामिनं न्यवेदयन् (१)। भोः स्वामिन् विचित्रवेषधारित्वं सम्पाद्य दुर्गाकमलादिभक्तान् मतभ्रष्टान् कृत्वा सर्व्वसम इव वर्त्तसे इदानीमागतान् विद्धि नः शारदाभक्तान् निगमादीन् परमतभेदनपटून्। किन्त्वास्मन्मतं निगमसिद्धं। वेदानां तद्रूपत्वात् तेषां नित्यत्वाच्च वेदानां नित्यत्वप्राप्तौ तद्रूपायाः शारदायाः नित्यत्वमस्ति न वेति सन्देहाभावात् सैव जगत्कर्त्री, नित्या वाग्वेद इति श्रुतेः वाचा विरूपनित्ययेति श्रुतेश्च। अतः परात्परतरा शारदा जगदुपादान कारणं या नित्यप्रभा (२) जगद्धृदयेऽस्ति सैव वाक् स ब्रह्मात्मा

---

१ पुनरन्ये शारदोपासकाः पुस्तकपुण्ड्राः कमलपाणयः प्रत्यवतिष्ठन्ते। ते किञ्च निगमसावित्रपरागमसुवागश्चक्र सर्व्वावागित्यादयः परमगुरुमिदमूचुः। वा. पु.।

२ यथानित्यप्रभा। स. पु.।

शिवनारायणादिशब्दवाच्यगुणातीतवृत्तिः तद्द्वारा परब्रह्मादुत्पत्तिरित्यविरुद्धं। अतः सर्वैर्मुमुक्षुभिः सैव निरन्तरमुपासनीया। अतो भवन्तोऽपि वृथाग्राजालं परित्यज्य पुस्तकादभिशिक्षिताः वागुपासनं कुरुध्वं वाक्स्वरूपज्ञानेनैव मुक्ता भवथ। अवेदार्थवित्पुरुषाः तं परमं वाग्रूपं न विदुः। नावेदविन्मनुते तं बृहन्तमिति श्रुतेः। अतः सद्ब्रह्मादिशब्दवाच्य परं वाग्रूपं सम्यग्वेत्ता पुरुषो मुक्तः। ब्राह्मणस्य तद्व्यतिरेकेण मुक्त्यभावात्। साङ्गो वेदोऽध्येतव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः साक्षात्कर्त्तव्येति श्रुतेः। अतः सर्व्वदा निश्चयेन वागुपानुसन्धानं कुरुत। एवं प्राप्ते।

श्रीमदाचार्य्यैरिदमुच्यते किं निगममूढ अवोचि भवदज्ञानं केन वारयितुं शक्यं। भोः सारस्वताः भवन्मतमसमञ्जसं कस्मात् श्रूयतां। वर्णमात्रस्य नित्यत्वमभिमतमुतवेदादिरूपवर्णसन्ततेः। नाद्यः उत्पन्नो गकारः नष्टो गकार इत्यादि प्रतीतेर्वर्णमात्रस्यानित्यत्वात्। सोऽयं गकार इत्यादिप्रतीतिस्तु सेयं दीपज्वालेतिवत्साहश्यावलम्बनत्वात्। सर्व्वप्राणिप्रलये सर्व्वस्य वर्णस्यापि प्रलयसम्भवाच्च। न द्वितीयः। यस्य निश्वसितं वेदा इति जन्यत्वदर्शनात् यज्जन्यं तदनित्यमिति प्रमाणेन अनित्यत्वावगतेः। वाचा विरूपनित्यया इत्यादिश्रुतिस्तु प्रवाहानादितया स्वर्गादिवत्सापेक्षिकं नित्यत्वं प्रतिपादयति नात्यन्तिकं।(२)

---

२ शक्यं केन नित्यत्वे सत्ये वाङ्क्ष्यता स्यात् कूटस्थत्वोपादिसङ्गमज्ञानशब्दरूपवाच्यः कथं नित्यत्वशक्यं

अतः षड़ङ्गपरिशोभितस्य वेदराशेः महायुगान्ते प्रलयदर्शनात् तदनुप्रवृत्ते महायुगे सूर्य्यःकिल कालयुगादिकर्त्ता महर्षिभ्यो यच्छास्त्रं प्राह तदेव वेदादिकमिति। उक्तञ्च सूर्य्यसिद्धान्ते। युगे युगे महर्षीणां स्वयमेव विवस्वतेति। अतः प्रतियुगप्रलयवृत्ति-शाप्यन्तिश्रुतिप्रत्यासत्तिशङ्केः सरस्वत्याः कथं शक्यं नित्यतां रचयितुं देवानामनित्यत्वेऽपि (१) ब्रह्मणो वक्तृस्थायाःसरस्वत्या नित्यत्वं तदा चक्र जगत् (२)-सृष्टिस्तस्य ब्रह्मशक्तित्वादिति यदुच्यते न हि तदपि रमणीयं। चतुर्मुखस्य प्रथमजीवस्यानित्यत्वे तच्छक्तेरनित्यत्वमस्ति वा न वेति सन्देहाभावात् परब्रह्मशक्तिः परप्रकृतिर्महदादि सत्त्व कारणं सरस्वतीति यदुच्यते न हि तदपि समञ्जसं। ईश्वरव्यतिरिक्तस्य सर्व्वस्यापि प्रलयदर्शनात् वाङ्मनोवृत्तिद्वयातीतस्यैव परमात्मनः सद्ब्रह्मादिशब्दवाच्यत्वं न तु प्रकृतेः। अतः स्वगणनिगम मूढबुद्धिं परित्यज्य सर्व्वशब्दवाच्यस्य तद्व्यतीतस्य परमात्मनः सम्यक्ज्ञानेनैव मुक्तिरन्यथा न ह्येवं(३)

---

सम्पादयितुं अनित्यप्रपञ्चस्य वाग्रूपस्य सदादिशब्दवाच्यत्वं कथमुक्तं भवता किञ्च वर्णमात्रस्य नित्यत्वं वा सन्ततेर्नित्यत्वं वा नाद्यः सर्व्वप्राणिप्रलये वर्णस्यापि प्रलयसम्भवात् न द्वितीयः 'यस्य निश्वसितं वेदा' इति जन्यत्वदर्शनात् यज्जन्यं तदनित्यमिति प्रमाणाच्च। वा. पु.।

१ वेदानामनित्यत्वेऽपि। तै. पु.।

२ तद्वारा जगत। तै. पु.।

३ नह्येवं। वा. पु.।

अतः शुद्धाद्वैतवृत्तिमाश्रित्य स्नानादिसत्कर्म्म कुर्व्वन् पञ्चपूजा-परायणः त्वं कर्म्मफलं ब्रह्मार्पणमिति कृत्वा अनुष्ठिते सत्कर्म्मणि अनेकदुरितक्षयकारणे ज्ञानप्रवृत्तौ जातायां लिङ्गशरीरभङ्गद्वारा मुक्तो भवसीति सम्यगुपदिष्टः निगमः सर्व्वैः स्वकीयैः सह त्यक्तलिङ्गः कृतार्थोऽहमस्मीति परमगुरुमाचार्य्यस्वामिनं नत्वा शुद्धाद्वैतवृत्त्याश्रितोऽभवत्।

इत्यनन्तानन्दगिरिकृतौ शङ्करविजये शक्तिमतैकदेशनिवर्हणं नाम एकविंशं प्रकरणं ॥ * ॥

## द्वाविंशं प्रकरणं।

—————०*०—————

एवं परिहृतेषु दुर्गाक्रमनाद्याणीमतभिद्रामिषु पुनरन्ये शक्तिवादिनः राजश्यामलोपासकाः शक्तिचिन्तामचिदानन्दा-दयः वामाचारिणः प्रत्यवतिष्ठन्ते। ते समागत्याचार्य्यस्वामिनमिदमूचुः(१)। भोः स्वामिन् सम्वित्स्वरूपमविदित्वा यतिवेषधारी मतवह्निरिव (२) समागत्य दुर्गाद्युपासकानां वृत्तिमन्यथासिद्धां (३)कृत्वा करतलीकृतमच्छतत्त्व इव वर्त्तसे। किं तव ज्ञानेन तेन तस्य शशविषाणवद्वन्ध्यापुत्रवद्गगनारविन्दवदत्यन्तासत्त्वात् सृष्टौ प्रलयेऽपि च भेदस्यैव सिद्धत्वात्। ईश्वरेऽपि विमर्शः पृथगेव यथा भर्त्तरि भार्य्यान्या तथैवेत्यर्थः। तयो जन्मादिविरुद्धत्वा वृतत्त्वा शक्तिः। शिवस्यापि तत्कारिणी। तया विना तस्य-

---

१ पुनरन्ये शक्तिवादिनः किल वामाचारतत्पराः समागत्य आचार्य्यस्वामिनमिदमूचुः। वा. पु.।

२ यतिवेशधारी वह्निरिव। वा. पु.। का. पु.।

३ अन्यथा सिद्धान्तं। तै. पु.।

गुणचन्द्रक्रियायामशक्तसमर्थत्वात्। अतः शक्तिरेव शिवस्यापि कारणं। तद्द्वारा जगत्प्रवृत्तिदर्शनात्। अतश्च विमर्शवादिना-मस्माकं मतमेव श्रेयस्करं, निर्विमर्शवादिनां तु भवतां मुक्ति-रपि नास्ति। कथमित्युक्ते मुक्तिकारणाभावात्, मुक्तिकारणं हि विद्या किल, अतश्चापि विद्यावादिनां मुक्तिः करस्था विमर्श-प्राप्तिरेव मुक्तिरिति। एते राजश्यामलोपासकाः मणीन्द्रसुहो-नवीतरूपपरात्मनभस्वादयः पञ्चदश्युपासकाः शक्तिविलास-चिदानन्दचिदङ्कुरविचरणोपासकाश्चन्द्रादयश्च सन्तिरन्ते। अ-व्यक्तरूपविमर्श एव ब्रह्म तदतीतं वाङ्मनोवृत्त्यतिरिक्तं ब्रह्मा-स्तीति यदुच्यते तत्तदपि (१) तदाश्रितं शिवशब्दवाच्यं तद्व्य-तिरिक्तपरभावात् तयानित्यत्वं (२) श्रुत्यागमसिद्धं नित्यपदार्थ-योर्मध्ये शक्तेरधिकत्व तद्ज्ञानकारणं रहस्येष्टादिकं कर्म कुर्वतां ज्ञानसिद्धिदर्शनात्। अतो वयं षोडश्युपासकाः पूर्णाभिषिक्ताः कृतार्थाः कृतकृत्याः समाः किल। तस्मात् त्रिविधानामस्माकं निस्त्रैगुण्ये पथि विचरतां किमवकुण्ठनं लोकत्रये विद्यते। वि-हिताविहितमार्गद्वयस्वच्छन्दानां स्वर्गनरकप्रवृत्तिः। ज्ञानिनां मत्तगजवन्निरवकुण्ठनगतिप्रवृत्तेर्विद्यमानत्वात्। पूर्व्वयुगे भृगुवग-स्त्यकृभुनिदाघजड़भरतविश्वामित्ररामादिषुवामोपासकेषु (३)

१ यद्युच्येत। तदपि। वा. पु.।

२ तयोर्नित्यत्व। ते. पु.।

३ पूर्व्वयुगेषु भृगुवगस्त्यकृभुनिदाघजडभरतविश्वामित्र रामदशरथपरशुरामात्रेयश्रीकृष्णादिषु दक्षिणोत्तराचार प्रव र्त्तकेषु। ते. पु.।

लोकत्रयातीतवृत्तेः ज्ञानोन्नतेश्च (१) इष्टत्वात् तेषां मुक्तिः करस्थैव। तस्माच्च तदाचारशीलवतां नः जीवद्दशायामपि मुक्तिरेव।

यदि नो पश्चिमं जन्म यदि वा शङ्करः स्वयं।
तेनैव लभ्यते विद्या श्रीमत्पञ्चदशाक्षरी ॥ इति ॥

देव्यागमवचनस्य सत्यत्वात् (२) अतो विद्यावतां नः किञ्चिद्विचारणीयं। भवन्तोपि सर्व्वं परित्यज्य विद्योपासका भवथेति प्राप्ते श्रीमदाचार्य्यः पठति।

भोः पूर्णाभिषिक्त भवन्मतमसत्यं। कथमनित्यत्वात् तथा हि श्रुतिः यत्र त्वस्य सर्व्वमात्मैवाभूत् तत् केन कं पश्येदित्यादिना सिद्धज्ञानिनः पुरुषस्य आत्मातिरेकादर्शनात्। तदानीं विमर्शः कुत्र कल्पनीयः। ईषदपि तदतिरेके जगदभावात् जगत्सत्यत्वे हेतुः प्रकृतिः जगदभावे किं प्रकृत्यभावः शङ्कनीयः। अनित्यप्रकृतिज्ञानेन किं फलं अथ च तस्याः बहुरूपतोक्तौ इन्द्रो मायाभिः पुरुरूप ईयते इत्यादिश्रुत्या गुणमयी गुणकारणञ्च सा भवति। अतो नित्यायाः प्रकृतेरुपासनापेक्षया सत्यादिलक्षणलक्षितस्य परमात्मनो विशेषज्ञानेन मुक्तिदर्शनात्। स एक एव सर्व्वैर्मुमुक्षुभिरुपासनीयः तस्य सत्यसङ्कल्पत्वादिच्छामात्रेणैव महदादिजगदुत्पत्तिका-

---

१ ज्ञानोन्नतस्य च इति। रा. पु.। का. पु.। ज्ञानस्य चेति तै. पु.।

२ सत्त्वात्। तै. प।

रणत्वात् ईश्वर एक एव सर्व्वैरुपास्यः। गृहस्थे गृहिणीजात-सुखानुभवो गृहस्थस्यास्ति देवे तदभावात् (१)। किञ्च ईश्वरस्यापि किञ्चित्करत्वमुक्तं तदपि न सम्भवति सर्व्वशक्तिः सर्व्वमयः सर्व्वकर्षणमिति श्रुतिभ्यः वाङ्मनोवृत्त्यतीतस्य ब्रह्मणस्तदाश्रितत्वमुक्तं भवद्विवेकस्य न लक्षणं किमु वक्तव्यं कलञ्जभक्षणशीलस्य वक्तव्यं किं सालतम् (२) अभक्ष्यभक्षणशीलस्य सुतरां प्रामाणिकत्वाभावात् वेदविरोधाच्च। अतो वामाचारवतां ब्राह्मणविच्छित्तिदर्शनात् भवतां प्रायश्चित्तं कर्त्तव्यं भृग्वादिवदयं कृतार्थो इत्युक्तं मन्दबुद्धीनां युष्माकं भृग्वादिसमता कथं स्यात् भृगुपादताडितो ब्रह्मादिर्धियमेव चकार। अगस्त्यादिषु समुद्रपानादिसाहसकर्माणि वर्त्तन्ते भवतां तादृक्शक्तिः कथं नास्ति। तस्मान्मूढबुद्धिं परित्यज्य ब्राह्मणाद्वैष्टेर्भवद्भिः प्रायश्चित्तं कर्त्तव्यमिति सम्यगुपदिष्टास्ते परमगुरुं नत्वा सच्छिष्याः कृतप्रायश्चित्ताः शुद्धाद्वैतवादिनः सत्कर्मशीलाः पञ्चपूजापराः बभूवुः।

इत्यनन्तानन्दगिरिकृतौ शङ्करविजये शक्तिमतैकदेशिचिन्तयनिवर्हणं नाम द्वाविंशं प्रकरणं ॥ * ॥

---

१ गृहस्थे गृहिणीवद्विमर्श इत्युक्तं तदप्यसत्यं गृहिणीजातसुखानुभवो गृहस्थस्यास्ति तथा देव तदभावात्। तै. पु.।

२ किं सत्यत्वं। वा. पु.।

# शङ्कर विजये

## त्रयोविंशं प्रकरणं।

———०*०———

तस्मात्पुरादुत्तरमार्गगामी
श्रीशङ्कराचार्य्यगुरुः सशिष्यः।
स उज्जयिन्याख्यपुरं ददर्श
कापालिकाचारपरैः समेतं।
स्थित्वा द्विमासं तत्रैव तत्रस्थानाह सत्वरं। (१)
आचारः प्रोच्यतां युष्मत्कुलागतविधिश्च कः।
इति पृष्टा यतीशन्तमूचुः कापालिकाः परे॥
स्फटिकैरर्द्धचन्द्रैश्च जटाभिः परिशोभिताः।

स्वामिन्नस्मदाचारः सर्व्वप्राणिसन्तोषकरः कर्महीन, कर्मणा न मुक्तिरिति वचनात्। मदुपास्यो भैरव एक एव जगत्कर्त्ता। ततः प्रलयो भवतीति यो वा प्रलयकर्त्ता स एव स्थित्युत्पत्त्योरपीति। (उपसंहारवलेनैव नीयतां स उपक्रम इति शास्त्रवृत्तेः। इत्यधिकः। स. पु.।) उपसंहारवलान्निर्द्धारित

---

१ तत्रस्थानातिसत्वरः। स. पु.। वा. पु.।

उपक्रमोपि चेति शास्त्रवृत्तेः तदंशा एव सर्व्वे देवाः तत्तद-धिकारमभ्यन्नाः श्रीमद्भैरवाज्ञां शिरसा धृत्वा तदुक्तिप्रत्यामत्रग-क्रयः तत्तत्कार्य्यपराः बभूवुः ।

किञ्च मद्गुरुभिरेवमुक्तं। एकोपि भैरवो ह्यष्टमूर्त्तिधरः

असिताङ्गो रुरुश्चण्डः क्रोधश्चोन्मत्तभैरवः।

कापाली भीषणश्चैव संहारश्चाष्ट भैरवाः॥ इति॥

वचनात्।

असिताङ्गो विष्णुरूपः। रुरुर्ब्रह्मरूपः। चण्डः सूर्य्यः। क्रोधो रुद्रः। उन्मत्तः इन्द्रः। कापाली चन्द्रः। भीषणो यमः। संहारः स्वयम्। एतद्व्यतिरिक्तदेवास्तत्तदंशाः सृष्टिकर्त्तारः सर्व्वेपि रुद्रांशाः। स्थितिकर्त्तारः सर्वेऽपि असिताङ्गांशाः। संहारकर्त्तारः सर्वेऽपि क्रोधांशा इति। एवं जगत्सृष्ट्यादिकं कृत्वा प्रलयानन्तरं निजसप्तमूर्त्तिसङ्कोचं कृत्वा एकः शाश्वतः संहारभैरवः परमात्मा वर्त्तते अतः सर्व्वदा अस्मन्मतस्य श्रेष्ठत्वात् सर्व्वैर्मदाचारः परिग्राह्यः सर्व्वदा बोधोल्वणनित्यानन्दोऽहं वटुकनाथनामतः मच्छिष्योऽस्ति विश्वरूपविदितवेषविश्वरूपविदितरवादयः सर्व्वेपि सदा द्रव्यजनितबोधपरवशाः (१) कापालिकशस्त्रालिङ्गनेन तुष्टान्तरङ्गाः (२) सङ्गमोद्भूतपरामृतपानपराः पशुजनकल्पितस्वाराज्यादिसुखं तृणीकृत्य देहान्ते भैरवः

---

१ सदासम्बिद्द्रव्यमहामांसमधुसेवाजनितबोधपरवशाः इति। तै. पु.।

२ कापालिकशक्त्यालिङ्गनतुष्टान्तरङ्गाः। तै. पु.।

पदमस्तीति निर्भयाः सन्तो वर्त्तन्ते । एवमत्यन्तवञ्चनकम-नममलकीर्त्तिविस्तृतं परित्यज्य मूर्खजनाः श्रुतयः प्रमाण-मिति पूर्व्वपक्षसिद्धान्तं नन्दिकेशविश्वकर्म्मादिदन्तशाखाग्निभ-स्मायुतमवलम्ब्य घटीयन्त्रघटवन्नैरन्तर्य्यजन्ममरणप्रवाहप-तिताः कथं बोधं वहन्ति तस्मात् भवान् सन्न्यासी कमण्डलुधारी किल कर्महीनः कापालिकयोग्य एव अतो भवता स्वीकृते कापालिकमताचारे भवच्छिष्याः अपि तथैव भविष्यन्तीति प्राह ।

श्रीमदाचार्य्यस्वामिभिरिदमुच्यते किं मूढतम जल्पसि सा ते श्रुतिः (१) भगवन्मुखगुहाविर्भूतपञ्चास्येव विधि-रहितमतमातङ्गजशिनादना किलातः श्रुतिविरुद्धाचार-नतपरान् युष्मान्विचेत्तुमागमं । मद्यमांसाशिनां ब्राह्मण्य-हानिदर्शनात् मद्यपायिनस्तव भैरवपरवचनेन किमागतं असम्बद्धप्रलापिनं कापालिकमतगुरुं बहुस्त्रीपुरुषमर्य्यादा-हन्तारं सर्व्वस्त्रीपुरुषसम्पर्कसञ्जातपापभागिनं तृणीकृत वेदशास्त्रादिप्रपञ्चं ब्राह्मणसमिद्दाहानलं ताड़यिष्यामीति शिष्यैस्तं सगणं ताड़यामास ततः कापालिकगुरुः स्वशिष्यान् परिताडितान् दृष्ट्वा सक्रोधमित्युच्चैः उक्तवान् यतीश्वरं एता-वत्याप्तपञ्चिकैरवध्यः सगणोऽहं भवता ताडितोऽस्मि मदुपास्य संहारभैरवं मन्त्राविर्भूतं करोमि स तु त्वामचिरेण सगणं भक्ष-यिष्यतीत्युक्त्वा पुनरुक्तमित्युच्चार्य्य वामहस्तेन नरकपालं धृत्वा

१ मातेव श्रुतिः । तै. पु. ।

तत्पुरापूरणं मन्त्रेण विधाय स्वयमर्द्धं पीत्वा अवशिष्टं शिष्येभ्यो दत्वा रक्तारुणलोचनः समध्यं पश्यन्निदमाह यः संहारकालो भैरवः प्रभुरीश्वरः स एवागत्य सन्नासिप्रभृतीन् भक्षय सत्वरमित्यु चैस्त्रिरुक्तमात्रेण खड्गकपालघण्टाशूलपाणिर्दिगम्बरो जटाचित्रिताम्बरः संहारभैरवः किलाविर्बभूव।

संहारभैरवं नत्वा सन्नासीति किलाब्रवीत्।
स्वामिन् वेदेषु शास्त्रेषु पुराणेषु च कर्म्म यत्॥
प्रतिपादितमस्तीह तत् कर्त्तव्यं हि धर्म्मतः।
विप्राणां कर्म्मणा धर्म्मं साध्यं स्यादिति मे मतं॥
धर्म्मेण सर्व्वपापौघो नष्टं याति शुचिव्रतात्।
पापसङ्घे तथा नष्टे मनःशुद्धिः प्रजायते॥
शुद्धे मनसि सर्व्वात्मसाक्षात्कारो भवत्यलं।
स एवमुक्तः सर्व्वेषां ब्राह्मणानां पुरःस्थितः॥
लब्धक्तः सहसावादि (१) दुष्टयुक्तिपरम्परां।
एतन्नोचितमित्युग्रं मच्छिष्यैस्ताडितः स तु॥
आकरोदागतं त्वान्तु मन्त्रवीजपरायणः।
इतः परं त्वमेवैतत् सत्यासत्यं कुरु प्रभो॥
इत्युक्तो भैरवः प्राह विप्रदण्डार्थमागतः।
शङ्करस्त्वं सदा पूज्यः सर्व्ववेदपदार्थभाक्॥
भवत्कृतं हि यत् कर्म्म मयापि च कृतं हि तत।
तेषां कापालिकानान्तु ब्राह्मण्याचरतां कुरु॥

---

१ सहसायादि। स. पु.। का. पु.। वा. पु.।

विकले तु कलौ प्राप्ते तेषां वृत्तिर्यथे प्सिता ।
बभूव मन्त्रबद्धोऽहं प्रत्यचोस्मि न धर्म्मतः ॥
इत्युक्त्वान्तर्दधे देवः कापालिकमतानुगाः ।
तदाकर्ण्यश्रवणाद्धीनाः परिव्राट्कुलशेखरं ॥
नत्वा द्वादशधा सर्व्वे वटुकाद्याः सुविस्मिताः ।
स्वामिन्मूढा वयं यस्मात् पालयास्मांश्च सादरं ॥
एवमालापिनो दृष्ट्वा करुणापूर्णविग्रहः ।
आज्ञापयामास यतिः शिष्यांस्तेषांविशोधने ॥
पद्मपादमुखाः शिष्याश्चक्रुस्तान् ब्राह्मणाध्वगान् ।
प्रातःस्नानरतान्नित्यं सन्ध्याकर्म्मदृढव्रतान् ॥
पञ्चपूजापञ्चयज्ञपरान्निश्चलमानसान् ॥

वटुकादयस्ते सर्व्वज्ञमूर्त्तिं परमगुरुमाश्रित्य सच्छिष्या बभूवुः ।

इत्यनन्तानन्दगिरिकृतौ कापालिकमतनिवर्हणं नाम त्रयोविंशं प्रकरणं ॥ * ॥

## चतुर्विंशं प्रकरणं।

---

एवं निराकृते पुरन्ये नानावर्णाः कापालिकचार्व्वाकसौगतक्षपणकजैनबौद्धाः प्रत्यवतिष्ठन्ते तत्र तावच्छूद्रजातिः उन्मत्तभैरवनामा कश्चन कापालिकः चितिभस्मपूर्णकलेवरः नरकपालमालाभूतगलः फालदेशरचितकज्जलरेखः सकलकेशरचितजटाजूटो व्याघ्रचर्म्मरचितकटिसूत्रकौपीनः कपालशोभितवामकरः सनादघण्टाधृतदक्षिणकरः शम्भुभैरव अहो कालीश इति मुहुर्मुहुर्जल्पन् आचार्य्यस्वामिनमिदमब्रवीत् स्वामिन् किं कापालिकमते न्यूनतास्ति तदन्यत्र किं फलमस्ति वटुकनाथादिका भवद्भिस्तिरस्कृताः कापालिकमतभ्रष्टा बभूवुः तद्दूषणं ब्राह्मणजातित्वं (१) न मे जात्या प्रयोजनं वर्त्तते अविवेकस्यैव जातिः कारणं ब्रह्मादिपिपीलिकान्तदेहस्य भौतिकत्वात् कस्य जातिर्वक्तव्या अनङ्गमयशरीरस्य चर्म्ममांसास्थ्यादिसप्तधातुमयस्य समत्वेनैव सर्व्वप्राणिषु

---

१ ते तु जात्याश्रयेण दूषिताः। स. पु.। का. पु.। तै. पु.।

वर्त्तमानस्य विशेषाविशेषत्वं भवद्भिः कल्पितं भैरवाश्रया मातृयोनेरुत्पन्नस्य नीचोच्चत्वन्तित्वं मन्दा अपि नाङ्गीकुर्व्वन्ति अतोऽस्माकं न हि प्रमाणं जातिः किन्तु जातिद्वयं दृश्यते स्त्रीत्वं पुंस्त्वञ्च तयोर्मध्ये स्त्रीजातिः श्रेष्ठा कथमित्युक्ते तत्संयोगेनानन्दभैरवनन्दनस्य विद्यमानत्वात् यदुक्तं श्रुत्यादिना भवद्भिः परदारां न गच्छेदित्यादिनिषेधवाक्यं तद्वयं नाङ्गीकुर्मः तस्याज्ञानविजृम्भितत्वात् । अस्मन्मताधिकारिणो या विद्या ते सा मदीयैव आनन्दग्रहणार्थं चर्म्मणश्चर्म्मसंयोगे कृते जीवस्य कोऽनर्थो भवति परामृतत्वप्रजीवस्य मोक्षदर्शनात् सार्थक एव देहपतनानन्तरं भैरवप्राप्तिरेव मोक्ष इति प्राप्ते श्रीमदाचार्य्यः पठति ।

भोः कापालिक समीचीनमुक्तं भवता इदमेकं सत्यं वद भवन्माता कस्य पुत्रीति नियमितः कापालिकः पुनराह स्वामिन् मदीयमाता दीक्षितपुत्री तद्दीक्षितत्वं कथमित्युक्ते तालादिवृक्षगतां सुरामाहृत्य हस्तग्रहणादिना तदानन्दमिच्छुरपि स्वयं न पिवति किन्तु तद्विक्रयणशीलः तस्माद्दीक्षित इत्युच्यते तस्य पुत्रिका मम माता आनन्दानुभवाय आगतान् पुरुषान् निजाङ्गसमर्पणानन्दसमुद्रमग्नान् सदाकरोत् तत्सुतोऽहमुन्मत्तभैरवनामा दिने कमण्डलुसुरापानचमत्कारसम्पन्नस्त्वेवमेव प्रसिद्धः मत्पिता कुलालः तदग्रे देवा अपि न तिष्ठन्ति सुरागन्धविमुखाः पलायन्ते अतः पितृतः समागतः सत्कुलप्रसूतोऽहं भवद्भिरपि न विचारणीय

ष्वेत्यालापिनं परमपुरुष इदमाह गच्छ कापालिक यथासुखं विहर ब्राह्मणानेव दुष्टमतावलम्बिनो दण्डयितुमस्मद्गुरुः नदितरेषामध्ययनपादसेवनादिवृत्तिमाशाचारानुसरणञ्च प्रशस्तमपि भ्रष्टस्य तव किं मानमित्युक्त्वा एष उच्चाटनीय इत्याचार्यवचनं शिरसा परिगृह्य तच्छिष्याः कपालिनमुन्मत्तं मदिरापानमत्तं कापालिकं दूरमत्यजन्।

इत्यनन्तानन्दगिरिकृतौ कापालिकोद्दे [illegible] नाम चतुर्विंशं प्रकरणं ॥ * ॥

## पञ्चविंशं प्रकरणं।

---०*०---

ततश्चार्व्वाकः प्रमथैः शङ्करमिव बहुशिष्यवरैराश्रितं लोकगुरुं श्रीशङ्कराचार्य्यं दृष्ट्वा किमेतत् जगन्मूर्खजनाक्रान्तं विचित्रमिव जातं किमयं देहेन्द्रियातीतः, शून्यात्मवादिनः असन्तस्तेषां युक्त्यभावादेव लोके किल विकला इव बहवो जाता मूढतराः तेषां सहवासेन बुद्धिमतामस्माकमपि दुष्टमतिरायातीति बहुधा विचार्य्य अथैवं (१) तदग्रणीमन्त्रयामीति कश्चिदस्ति खलु तस्य यदि विवेकोऽस्ति तदा तदग्रे क्षणं स्थास्यामि नो चेत् शीघ्रमागच्छामीति च सभां प्रविश्य इदमुवाच स्वामिन् यदि भवता परमार्थो विदितस्तर्हि (२) मुक्तिलक्षणं वद तावत् मद्विवेकः शृणु नां पितृमातृकारणस्य कार्य्यरूपशरीरस्येन्द्रियप्राणजीवात्मकस्य लय एव मोक्षः मन्दमतयस्तस्य पुनरागमने

---

१ अप्येवं। स. पु.।

२ स्वामिन् लोकान् प्रतारयन्निव वर्त्तसे। यदि भवता परमार्थो विदितस्तर्हि। स. ख. पु.।

जल्पन्ति, भस्मीभूतस्य देहस्य पुनरागमनं कुतः, शक्यं वक्तुं यदि समुद्रलीनानां सरिदम्भसां पुनरागमनमस्ति चेत् तदा मृतिं गतानामपि पुनरागमनमायाति। अतो मृतिरेव मुक्तिरिति निरवद्यं केचिन्मन्दधियः किल मृतानां श्राद्धं कर्म्म कुर्व्वन्ति तदन्नेन मृतानां तृप्तिरस्तीति तद्विवेकः किमु वक्तव्यः किञ्च स्वर्गनरकरूपः परलोकोऽस्ति तत्र सुखदुःखानुभवो मृतानामस्त्येव पुण्ये पापे वा क्षीणे देहिनः मर्त्यलोकप्राप्तिरिति केचिज्जल्पन्ति तन्मतं सुतरामप्रामाण्यं (१) इहैव स्वर्गनरकानुभवस्य विद्यमानत्वात् यो वा सुखभुक् स एव स्वर्गस्थः यो वा क्लेशभुक् स एव नरकस्थ इतिप्रत्यक्षदृश्यस्वर्गनरकरूपफलस्य परोक्षस्थितिर्न हि कल्पयितुमुचिता भूतेषु भूतानां तत्कार्य्येन्द्रियाणाञ्च नष्टत्वात्तेषां परलोकगमनमनर्थकं किन्तु जीवस्येति चेन्न तस्य स्वरूपाभावात् रूपाभावस्य जीवस्य कथं गमनं वक्तुमुचितं यदि घटाकाशस्य गमनमस्ति चेत् जीवस्यापि गमनं वक्तुं शक्यं वृक्षाद्वृक्षान्तरं गतस्य पक्षिण इव जीवस्येति चेन्न सरूपस्य पक्षिणस्तथागमनमुचितं नीरूपस्य जीवस्य वक्तुमशक्यत्वात् तस्मादस्मन्मतमेव युक्तमिति प्राप्ते।

श्रीमद्भिरिदमुच्यते भोश्चार्व्वाक भवदुक्तं नार्हं वेदविरुद्धत्वात् (२) तावज्जीवो देहेन्द्रियेभ्यो भिन्नः स एवास्माभिः परमात्मेत्युच्यते स एव सर्व्वभूतान्तःकरणेषु वर्त्तमानः साक्षी

१ तन्मतं पुनरागम प्रमाणं। वा. पु.।

२ भवन्मतमयुक्तं वेदविरोधात्। स. स्तु. पु.।

नमुचितमेव सिद्धान्तितं। (१) तस्मात् चार्व्वाकमूढ़ पापाचार तूष्णीं गच्छेत्युक्तः स तु वेषभाषादिकं परित्यज्य श्रीमदाचार्य्यस्य पादपद्मद्वयं नत्वा तत्पुस्तकभारभरणोद्युक्तगोपालकोऽभवत्।

इत्यनन्तानन्दगिरिकृतौ चार्व्वाकमतनिवर्हणं नाम पञ्चविंशं प्रकरणं ॥ * ॥

---

१ नच वेदस्याप्रामाण्येन त्वदुक्त सर्व्वानपमानमितिवाच्यं वेदस्याप्रामाण्ये सुखदुःखजनककर्म्माभावेन ऐश्वर्य्यादिना कश्चन दुःखीतिव्यवस्था न स्यात् तव मात्रागमनादियथेच्छव्यवहारापत्तिश्च इत्यधिकः। स. व्य. पु.।

षड्विंशं प्रकरणं

———०*०———

ततः पीनकलेवरः स्थूलशिरस्कः सौगतः श्रीशङ्करं नत्वा इदमुवाच स्वामिन् जगदिदं व्यत्यस्तमामीत् सर्व्वे दुर्ब्बोधवशात् कर्म्मशीला इव भान्ति किं कर्म्मणा भौतिकदेहस्यास्ति सृष्टिस्थितिलयं विना तादृक्शरीरस्य भौतिकरूपस्य स्नानेन किं शुद्धतास्ति जीवस्तु निर्म्मलो देहपातानन्तरं मुक्तः तयोरन्तरस्येति चेत् कथं वा स्नानवशाच्छुद्धिरस्ति अतो निरर्थकत्वात् स्नानादि कर्म्म न कार्य्यं किन्तु ऋणवशाज्जीवः पुनर्जातो भवतीति केचिन्मूर्खजना जल्पन्ति तन्न सत् देहादृष्टप्राप्तधनस्य कथमृणता वक्तुमुचिता द्रव्य लभ्यघृतादिभक्षणेन देहपुष्टेर्विद्यमानत्वात् पुष्टशरीरस्यैव तुष्टजीवकारणत्वात् अतो ऋणं कृत्वा घृतं पिवेदिति वचनस्य प्रामाण्यात् तत्त्वविदा पुष्टशरीरिणा भवितव्यं देहान्ते ऋणाभावात् तस्मात् तत्र तत्र ऋणं कृत्वा समग्रभक्षणशीलस्य सुखप्राप्तिरेव मोक्षसाधनं तदन्ते मोक्षः करस्थ एवेति प्राप्ते ।

श्रीमद्भिरिदमुच्यते किं सौगत जल्पसि देहपातानन्तरं जीवस्य मोक्ष इत्युक्तं तदसत्यं परलोकागमनदर्शनात् तत्र सुखदुःखानुभवस्य श्रुतिसिद्धत्वात् अन्यथा वक्तुमनुचितं स्मृतिश्च क्षीणे पुण्ये मर्त्यलोकं विशन्तीति अनेन परलोके लिङ्गशरीरबद्धजीवस्य सुखदुःखानुभवसिद्धोऽभूत् अतः परलोकादागत्य यस्य वा ऋणं दातव्यं यस्य वा द्रव्यमपहर्त्तव्यं तद्गर्भे तस्य जन्म भवत्येव तस्मात् अज्ञानबुद्धिं पापपङ्कलिप्तां (१) परित्यज्य सन्मार्गगामी भवेत्युक्तः पुनराह।

स्वामिन् सुगतमुनिः चतुःसमुद्रान्तां भुवं दृष्ट्वा विस्मयाविष्टमानसः सत्यमेतदिति जगद्विचार्य्य सर्व्वप्राण्युपासकोऽभवत् स तु मदुपदेशकाले करुणावशात् इदमाह सर्व्वप्राण्यहिंसा परमो धर्मः तादृग्विधधर्मेणैव कपालनिवृत्तेर्मुक्तो भवसीति तदारभ्याहमपि गुरुवाक्यं शिरसा परिगृह्य तत्पादध्यानासक्तः सर्व्वप्राणिषु दयापरोऽस्मि तदन्यो धर्म्मो नास्त्येव लोके किलातः परममतमस्मदीयं धर्मस्थानं भवदादिभिः सर्व्वैरङ्गीकरणीयमिति पुनः सौगतमते प्राप्ते।

परमगुरुभिरिदमुच्यते रे रे सौगत नीचतर किं किं जल्पसि अहिंसा कथं धर्म्मो भवितुमर्हति यागीयहिंसाया धर्म्मरूपत्वात् तथाहि अग्निष्टोमादिक्रतुः छागादिपशुमान् यागस्य परमधर्म्मत्वात् सर्व्वदेवतृप्तिमूलकत्वाच्च तद्द्वारा स्वर्गादिफलदर्शनाच्च पशुहिंसा श्रुत्याचारतत्परैरङ्गीकरणीया

---

१　पापकल्पितां। स. पु.।

तद्व्यतिरिक्तस्यैव पाषण्डत्वात् तदाचाररता नरकमेव यान्ति ।

वेदनिन्दापरा ये च सदाचारविवर्जिताः ।

ते सर्व्वे नरकं यान्ति यद्यपि ब्रह्मबीजजाः ॥

इति मनुवचनात् ।

हिंसा कर्त्तव्येत्यत्र वेदाः स्वतः प्रमाणं वर्त्तन्ते ब्रह्म-क्षत्रवैश्यशूद्राणां वेदोक्तिरनुष्ठानप्रकारः प्रमाणमेव तदन्यः पतितो नरकगामी चेति सम्यगुपदिष्टः सौगतः परमगुरुं नत्वा निरस्तस्वमताभिमानः पद्मपादादिमुनिवर्याणां पादरजो-[illegible] सततं तदुच्छिष्टान्नभुगनुवर्त्तनं चकार ॥

इत्यानन्दगिरिविरचिते शङ्करविजये सौगतमतनिराकरणं नाम [illegible] प्रकरणं ॥ * ॥

## सप्तविंशं प्रकरणं

—————॰✻॰—————

ततः क्षपणकः कौपीनमात्रधारी गोलयन्त्रन्तुरीययन्त्रञ्च कराभ्यां धृत्वा समागत्याचार्य्यस्वामिनमिदमब्रवीत् । भोः स्वामिन्मदीयमतमतिविचित्रं शृणु । क्षपणकः पूर्णसमयनामाहं कालजनकं सूर्य्यं गोलेन तुरीयेण यन्त्रेण वा बध्वा समयज्ञानेन स्वर्गमर्त्यपातालस्थलभ्यालभ्यशुभाशुभं वच्मि । किञ्च काल एव परमदेवता । मत्पक्षं चलयितुं ईश्वरोपि न समर्थ इति जल्पन्तमाचार्य्यः प्रत्युवाच ।

भोः पूर्णसमय समीचीनमुक्तं भवता त्वं कालवित् किल तथैवाहमपि तस्मान्मदाश्रयेणागच्छ यत्र भवत्परोक्षोचितकालागमनं तदानीं त्वां पृच्छामीत्युक्तः स तु तथैवास्त्विति तं सर्व्वदाश्रित्य सिद्धसङ्कल्पोऽ (१) भवत् ।

---

१ सत्यसङ्कल्पो । वा. पु. ।

ततो जैनः कौपीनमात्रधारी मलदिग्धाङ्गः सदाऽर्हन्नोऽर्हन् इति मुहुर्मुहुरुच्चैरुच्चरन् शून्याङ्गः शून्यपुण्ड्रधृतविन्दुपुण्ड्रः शिष्यसमेतः पिशाचवत् सर्व्वजनभयङ्करः समागत्य सकललोकगुरुमिदमुवाच । भोः स्वामिन् मदीयं मतमत्यन्तसुगमं श्रूयतां । जिनदेवः सर्व्वेषां किल मुक्तिदः जीतिपदवाच्यस्य जीवस्य नेतिपदेन पुनर्भव इति स एव दिव्यत इति देवः सर्व्वप्राणिहृत्पुण्डरीकेषु जीवरूपेण व्यवस्थित इति ज्ञानमात्रेण देहपातानन्तरं मुक्तः तस्य नित्यमुक्तिरूपत्वात् तेन करचरणादिसाधनद्वारा यद्यत् कर्म्म कृतं तत् सत्यं तस्य तदधीनत्वात् । अतो जीवः शुद्धः देहस्तु मलपिण्डः स्नानादिना तस्य शुद्ध्यभावात् वृथाप्रयोजनं स्नानादि कर्म्म न कार्य्यमिति प्राप्ते ।

श्रीपरमगुरुः पठति । भो जैन किमुक्तं भवता मूढतरेण जीवस्य देहनिवृत्तिरेव मुक्तिरिति निष्प्रयोजनत्वात् स्नानादि कर्म्म न कर्त्तव्यमिति च तदयुक्तं कथं जीवस्य देहत्रयं विद्यते । स्थूलसूक्ष्मकारणभेदात् । स्थूलस्य लक्षणन्तु पञ्चीकृतपञ्चमहाभूतस्वरूपं तच्चतुर्विंशतितत्त्वात्मकम् । सूक्ष्मस्य सप्तदशात्मकं लक्षणं एकादशेन्द्रियपञ्चमहाभूतबुद्धिसंख्याकम् । कारणन्तु अज्ञानमात्रं (१) तेषां लयस्तु स्थूलस्य सूक्ष्मे तस्य कारणे कारणस्य सगुणे सगुणस्य निर्गुणे परमात्मनीति तत्तदधिपतिविशिष्टानां देहानामेवं लये सच्चिदानन्दलक्षणलक्षितः परमात्मा जीव एव स्यात् जीवः परमात्मैव । तथा भेदभ्रमनिवृत्तौ मुक्तिरिति

१ कारणन्तु मनोमात्रं । वा. पु. ।

निरवद्यं ।· ननु प्रत्यक्षदृष्टात्स्थूलशरीराच्छरीरान्तरकल्पना निरर्थिका तत्सत्तामात्रे प्रमाणाभावात्। यद्यस्ति तर्हि जीवस्य शरीरत्रयसञ्चारो वक्तव्यः। मनःकल्पिते स्वप्ने गङ्गा मया दृष्टा हिमवान् मया दृष्ट इति व प्रत्ययोऽस्ति। देहादात्मनो निर्गमनस्य युक्तत्वात्। कारणशरीरत्वे मनसः कल्पिते जीवस्यापिनिर्गमनमेव वक्तव्यं। निर्गमिते जीवे (१) पुनःप्राप्त्यभावात्स्वप्नानन्तरमेव मरणप्रसक्तिः। चतुर्विंशतितत्त्वेष्वेव लिङ्गस्यान्तर्भावात् तत्कल्पना व्यर्था भूतजातीन्द्रियाणां तद्रूपत्वात्। अतोऽनया क्लिष्टकल्पनया न हि किञ्चित् प्रयोजनमस्ति। तस्मादेको देहः प्रतिजीवस्य तत्पातानन्तरं जीवस्य मुक्तिरिति प्राप्ते ।

श्रीमद्भिरिदमुच्यते । जैन मूढतर तत्त्वं न श्रुतवानसि । पञ्चीकृतभूतैः पञ्चविंशतिसंख्या जाता तयाI तत्त्वानाञ्चतुर्विंशतिरभवत् पञ्चविंशतिसंख्याकस्य ज्ञानरूपत्वात् । न हि चतुर्विंशत्या देहसिद्धिर्भविष्यति अपञ्चीकृतपञ्चभूताभावात्। अतः पञ्चीकृतैरपञ्चीकृतैश्च भूतैर्देहसिद्धिर्वक्तव्या अतः स्थूलापेक्षया लिङ्गशरीरमङ्गीकृतं स्थूलशरीरस्य पातानन्तरं जीवे सूक्ष्मशरीरासक्ते परलोकगमनारम्भः प्रसज्यते। अरूढस्य पुरुषस्य तु शीर्णे लिङ्गे सर्वं मनस्येवाध्यस्तं भवति। तच्छुद्धं मनस्तु जाग्रदाद्यवस्थास्वाभिमानी विश्वतैजसप्राज्ञेभ्यश्चोपरि विराजमानमङ्गुष्ठमात्रं सर्वजगत्प्रभुं मनोन्मनाख्यमधिगच्छति । स एव कारणशरीरलय इति प्रसिद्धः।

---

१ जाते। स. पु.। का. पु.।

एवं नष्टे शरीरत्रये सगुणनिर्गुणोभयात्मको मनोऽमनः परमात्मनि लीनो भवति स एव मोक्ष इति सर्व्वैरतीन्द्रियविद्भिरुदाहृतः, एवमत्यन्तदुःसाध्यस्य मोक्षस्य न हि देहपातात् प्राप्तिः सम्भवतीति सिद्धान्तः। एवं श्रीमज्जिदृक्तो जैनः शिष्यैः सह स्ववेषभाषाविमुक्तः परमगुरूणां प्रतिदिनं तण्डुलादिवस्त्राकर्षणशीलः वणिग्जनोऽभवत्।

इत्यनन्तानन्दगिरिकृतौ जैनमतनिवर्हणं नाम सप्तविंशं प्रकरणं ॥ * ॥

## अष्टाविंश प्रकरणं।

———०*०———

एवं निराकृतेषु कापालिकचार्व्वाकसौगतक्षपणकजैनेषु बौद्धः किल शवलनामा प्रबलः प्रत्यवतिष्ठते। किं स्वामिन सर्व्वोत्तम इव वर्त्तसे तव ज्ञानेन किमद्वैतफलमस्ति (१) तच्च शशविषाणवदत्यन्तासत्त्वात् दृष्टफलं परित्यज्यादृष्टफलाभिलाषी कथमसि। प्रत्यक्षद्रोहिणस्तव परोक्षेऽपि फलाभाव एव भविष्यति सर्व्वशून्यस्य परोक्षस्य फलदानासमर्थत्वान्निर्जीवत्वाच्च। यस्तु जीवशब्दवाच्यं चैतन्यं किल कश्चिच्छवरनामा लोके सर्व्वप्राणिषु वर्त्तते स तु एकोपि बहुरूपाणि धृत्वा हृदयादिप्रेरको भूत्वा नित्यमुक्तस्वरूपः कर्त्ताहं भोक्ताहमद्वयः परमानन्दोहमिति मन्वानः स्वाभीष्टं यावत्तावद्देहेषु क्रीड़न् पश्चान्मुक्तो भवति देहं परित्यज्येति बौद्धोक्तः श्रीपरमगुरुः पठति। भोः शवर अनर्हं भवता प्रतिपादितं कथमत्यन्तविरुद्धत्वात्

---

१ तवज्ञानेन किमद्वैतेन फलमस्ति। ते. पु.।

तस्य मोक्षः कथं देहपातानन्तरं (१) परलोकगमनदर्शनात्।

तथाहि पुराणे।

सत्यशौचरतो यस्तु देवतातिथिपूजने। (२)

स याति ब्रह्मणो लोकं यावदिन्द्राश्चतुर्द्दश॥

अग्निष्टोमं देवप्रीतिदं कुर्य्यादस्मादिन्द्रलोकं हि याति सत्याख्यः सत्पौण्डरीकात्प्रयाति याति तत्तद्देवोपासकास्तत्तद्देवमिति।

यो यो यां यां तनुं भक्तः श्रद्धयार्च्चितुमिच्छति।

तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहं॥ इति।

भगवद्गीतावचनात्।

इयं देवता मदीयोपासनया तुष्टा देहावसानान्मे लोकनिवासं दास्यतीति प्रमाणशतस्य विद्यमानत्वात् जीवस्य देहपातानन्तरं लोकान्तरगमनमस्तीति सिद्धमेवं परमात्मा सर्व्वदेवरूपः सर्व्वलोकद इति प्रसिद्धं। यो देव यस्याभीष्टः तल्लोकदः स एवात्मा एकोऽद्वितीय इति सिद्धं। अतो देहपातानन्तरमेव मुक्तिरिति सुतरामयुक्तं ज्ञानम्र्ते मुक्त्यभावदर्शनात्। ज्ञानस्य किं वा लक्षणमित्युक्ते सर्व्वभूतानि स्वस्मिन् सर्व्वभूतेषु ध्याता पुरुषो मुक्त इति प्रसिद्धेः।

उक्तञ्च श्रुतौ।

सर्व्वभूतेषु चात्मानं सर्व्वभूतानि चात्मनि।

सम्पश्यन् ब्रह्म परमं याति नान्येन हेतुना॥ इति॥

---

१ कस्य मोक्षस्य कथं देहानन्तरं। का. पु. वा. पु. स. पु.

२ सत्यशौचतपोयस्तु देवतातिथिपूजने॥ वा. पु. स. पु.।

तस्मात्त्वर मूढबुद्धिं परित्यज्य स्वस्थो भवेत्युक्तः प्रवर-नामको बौद्धः श्रीमदद्वैतसिद्धान्तिनं शङ्करनामानं परमगुरुं नत्वा तत्कीर्त्तिस्तवपरो वन्दिमागधसूतवेषधार्य्यभवत।

इत्यनन्तानन्दगिरिकृतौ बौद्धमतनिवर्हणं नामाष्टाविंश-प्रकरणं ॥ * ॥

एकोनत्रिंशं प्रकरणं ।

तस्माद्वायुदिशि प्रसिद्धमखिलैः शिष्यैः समेतः परः
प्राप श्रीशुद्धिदिव्यभस्ममूर्त्तिरनुमल्लाख्यं हि सत्पट्टनं ।
स्थित्वा तत्र दिनैकविंशतिमशेषान् वीक्ष्य तत्राश्रितान्
किं विप्रा वदत प्रभातमुखकालेकृत्यमार्षोद्भृतं ॥ (१)

जगद्गुरुभिराचार्य्यैरेवमुक्ताः पौराः किल नत्वेदमूचुः स्वामिन् मद्द्वंशप्रवृत्तेरागतमिदं लक्षणं यः परमेश्वरो मल्लासुरहरः प्रसिद्धो मल्लारिरिति लोके वर्त्तते तन्मूर्त्तिः किलात्रैवाविर्भूतजगदुत्पत्तिसम्पत्तिकारणं तामनुदिनं संपूज्य तद्वाहनरूपशुनकवेषभाषादियुक्ता वयं कण्ठधृतवराटिकामालिकाङ्काः शङ्काहीनाः त्रिकालनार्य्यर्घ्युवादिभिर्मल्लारिं प्रीतं कृत्वा वसामः तत्कटाक्षजनितानुदिनवर्द्धमानानन्दपरवशाः सर्व्वजगन्मल्लारिगर्भकोटरान्तर्गतमिति ध्यानासक्तास्तदतिरिक्तं किञ्चिदपि नेच्छामः तस्यैव सर्व्वात्मकत्वाच्च । किञ्च वेदेषु मल्ला-

---

१ किं विप्रा वदत प्रभातमुखकाले कृद्यार्षद्भूतं । तै. पु. ।

रिणः सर्व्वव्यापकत्वं वर्त्तते तद्वाहनस्यापि वेदविहितत्वात् तद्वेषभावावकानामस्माकं नचान्येच्छा तथा हि श्रुतिः। श्वभ्यः श्वपतिभ्यश्च वो नम इति। अतः श्रुतिप्रसिद्धा-चारस्य दुर्निवार्य्यत्वात् त्वमपि सखिभ्यः परममुक्तिकारणमस्मा-दाचारानुग्रहणं कुरु भवन्त्वावरणयोग्यानि वराटकानि दास्याम इति प्राप्ते।

श्रीमदाचार्य्यैरिदमुच्यते किं मठतम भवोपि मल्ला-रिकारणवादित्वं कथं घटते वेदविरुद्धत्वात् यतः परमात्मा एकोऽद्वितीयः सर्व्वसाक्षी सर्व्वकारणं सदेव सोम्येदमग्र आसी-दित्यादि श्रुतिप्रतिपादितः तद्ब्रह्माखिललोककर्त्ता तदिच्छा-रूपया प्रकृत्या महदादिकारणं जगत् असृजत (१) प्रकृति-गर्भजाताः ब्रह्मविष्णुरुद्राः सृष्ट्यादिकर्त्तारः किल तदन्ये ये देवाः तत्तद्गुणानुकूलवृत्त्या तदंशा एवेति प्रसिद्धाः यत्र कुत्र वा लयकारणे प्राप्ते रुद्रांशा वीरभद्रा भैरवादयो बहवः सन्ति तेषां ध्यानेन मुक्तिरिति वक्तुं न युचितमिव भाति मुक्तेर्वे वेश-भिदाविरहकारणत्वात् किञ्च श्ववाहनारूढस्य मल्लारिनाम्नो रुद्रांशस्य वेदप्रतिपादितत्वात् तन्मतमङ्गीकर्त्तव्यमिति किल भवतोक्तं नहि तदपि प्रौढतरं। एकादशरुद्राणां स्तवमारभ-माणेनानेन (२) कथं मल्लारिस्तुतिः कृता श्वपतिभ्य इत्यत्र रुद्रबाहुल्याद्बहुवचनमुक्तं ननु पूजायां बहुवचनमिति न्या-

---

१ असृज्यत। वा. पु।

२ स्तवमारभमाणेन नमकेन। स. पु. बा. पु. तै. पु।

येन मन्त्रिभ्यः श्वपतिभ्य एव नम इत्यर्थः। पूर्ववाक्ये श्वभ्य इति तद्वाहननमस्कारस्य विद्यमानत्वादिति यदुच्यते तदश्लीकर्त्तव्यं रुद्राणां जगद्व्यापकत्वं प्रतिपादयितुं श्वभ्यः श्वान्तर्गत- रुद्रेभ्यो नमः श्वपतयः श्वामश्ववत्वादयो वैवस्वतवंशसम्भवाः अथवा श्वपतयः श्वविक्रमार्ज्जितमांसादिभुजः अथवा श्वपतयः चाण्डालाः श्वमांसभक्षणशीलाः। तेषां विविधानां हृदयव्यापकेभ्यः रुद्रेभ्य इति निरवद्यं।

किञ्च शूद्राणां निकृष्टजन्तुत्वात् पापरूपत्वाच्च तदीयस्पृष्टा मृत्तिकास्नानस्य (प्राणायामादिना इत्यधिकः ते. पु.) ब्राह्मणानां सिद्धत्वात् तद्देशभाषाचिह्नं कथं भवद्भिर्धृतं तन्मात्रस्य प्रायश्चित्ताभावाद्भवदाचरितत्रिकालनाथान्तत्क्रियाचरणेन लुप्त सन्ध्यादिनित्यकर्म्मणः प्राप्तदोषस्य किं प्रायश्चित्तं वक्तव्यं एवं वंशप्रवृत्त्याचरितभवदुक्त्या ब्राह्मणस्य निरवकाश एव प्रसङ्गः। तस्मात् भवन्मुखनिरीक्षणेन सूर्य्यावलोकनस्य विधिबोधितत्वात् इतःपरं मौनमेव कर्त्तव्यमित्युक्ताः मन्त्रारिणः परमगुरुचरणारविन्दसमीपे छिन्नमूलतरव इव महाराजसमीपे कृतापराधिन इव शिलापतन्। दयारसाभिषिक्ततनुराचार्य्यस्वामी समीक्ष्य तान् तिष्ठध्वमित्युक्त्वा तेषां पापविशोधनं कर्त्तुमत्यन्तनिपुणानखिलज्ञान् स्वशिष्यान् पद्मपादहस्तामलकमुखान् आज्ञापयामास ते किल तेषां शिरोमुण्डनं महानद्यां अयुतमृत्तिकास्नानं मुण्डनाचारनियमनं पुनर्मुण्डनं शतमृत्तिकास्नानं प्रायश्चित्तं संकल्प्य ब्रह्मदण्डं यथाविधि

कृत्वा ब्राह्मण्यमार्गगतानाचक्रुः* तत्पुरब्राह्मणाश्च परम-गुरूणां मुख्यशिष्याः स्नानादिसत्कर्मशीलाः पञ्चपूजारताः शा-स्त्राध्ययनपरा बभूवुः ।

इत्यनन्तानन्दगिरिकृतौ मल्लारिमतनिवर्हणं नामैकोनत्रिंशं प्रकरणं ॥ * ॥

## त्रिंशं प्रकरणं

—— :*: ——

तस्मात्पुरात्पश्चिममार्गगामी
मल्ल्यसंज्ञां पुरमाप शिष्यैः ।
ढक्कादिवाद्यानुचलत्करीघै
विचित्रवस्त्रादिबङ्गपत्रैः ॥

तत्र पुर्यां विचित्रं विष्वक्सेनगोपुरपूर्व्वभागे विपुलतरायां मण्डपशालायामन्तर्गृहादिकल्पनां कृत्वा तत्र देवगृहे श्रीमदाचार्य्यः सम्यग्दर्भासनगतः सन् मनोन्मनाख्यमङ्गुष्ठमात्रं लक्ष्य पूर्णमण्डलाकारं परमात्मानमीक्ष्य तन्निस्यन्दपीयूषबिन्दुसन्दोहपानदृप्तसर्व्वाङ्गः कुण्डलिनीं पुनर्मूलाधारं नीत्वा तदधीशं गणपतिं स्तुत्वा सुखं चिरमास । तत्र विष्वक्सेनपरायणाः शङ्खचक्राचिह्नविराजद्भुजदण्डतीव्रपाणयः श्रीगुरुस्वामिनं नत्वेदमूचुः । स्वामिन् मदीयं मतमत्यन्तपुण्यदं विष्वक्सेनाधिदैवतं स तु किल वैकुण्ठशालिनो भगवतो (१) द्वितीयावतार

१ स तु किल वैकुण्ठसेनाधिपतिः । भगवतो । वा. पु. ।

इव सकललोकनियन्ता वर्त्तते। तस्य भक्ता वयमनिशमावसामः वैकुण्ठे नित्यमुक्ताः खलु नास्माकं यमादिभिरस्ति देहपातः। तदुपासनेन वैकुण्ठलोकप्राप्तिरिति वयं तमुपास्महे। भवद्भि-रपि तदुपासना विधेयेति प्राप्ते।

आचार्य्यैरिदमुक्तम् भवन्मतमयुक्तं (१)। वेदवाह्यत्वात तत्कथं नारायणकाण्डेषु श्रुतिप्रकरणेषु सर्व्वेषु विष्वक्सेनस्यानु-क्तत्वात्। भगवद्भक्ता वैकुण्ठे बहवो वर्त्तन्ते भगवद्दर्शपरैरेव तद्भक्तानाञ्च किञ्चित् प्रसादलवो दातव्यमित्यनुज्ञामात्रेण कथं तेषामुपास्यत्वमासीत् तथाकर्त्तव्ये प्रमाणाभावात्। तदी-यस्य नारायणस्योपासनन्तु तल्लोकेप्सुभिः कर्त्तव्यम्। तस्य सगुणत्वात् परम्परया मुक्तिद इति प्रसिद्धेः नतु साचान्मुक्तिप्रदः तमेवाखण्डरूपेण सर्व्वजीवैक्यभावनविशेषेण ध्यानतोस्य साचा-न्मुक्तिरिहैवेति (२) यूयं मुक्तिकाङ्क्षिणश्चेत् अखण्डमद्वितीय सर्व्वव्यापिनमात्मानं सर्व्वगुणातीतं श्रीगुरूपदेशवाक्यद्वारा ध्यात्वा मुक्ता भवथेत्युपदिष्टाः (३) त्यक्तलिङ्गाः परमगुरुचर

---

१ यमादिभिरस्ति देहपातात्तद्दृष्टचोदितमार्गेण वैकुण्ठ लोक एव प्राप्य इति प्राप्ते लोकविद्भिरिदमुक्तं। विष्वक्सेन मतमनुचितं कथं। वा. पु.।

२ सर्व्वजीवैक्य भावनविशेषेण ध्याता तस्य साक्षान्मुक्ति रिति। वा. पु.।

३ भविष्यन्तीति नियमिताः। वा. पु.।

णारविन्दद्वन्द्वं उत्तमाङ्गैर्नत्वा शुद्धाद्वैतविद्यां तदुपदेशेन प्राप्य पञ्चपूजापराः स्मार्त्तश्रौतसकलकर्म्मशीला बभूवुः ।

इत्यनन्तानन्दगिरिकृतौ विष्वक्सेनमतनिवर्हणं नाम त्रिंशं प्रकरणं ॥ * ॥

## एकत्रिंशं प्रकरणं।

---

एवं परिहृतेषु विष्वक्सेनमतेषु पुनस्तत्रस्था एवान्ये विष्णुसुता इतिप्रसिद्धाः मन्मथोपासनानिरताः क्रौञ्चविल्कामविद्विद्याविदित्यादयः पुष्पधनुर्लक्ष्मशोभितबाहुयुगाः परमगुरुं तत्वेदमूचुः। स्वामिन् अस्मन्मतं शृणु सर्व्वजनमनोरञ्जनहेतुभूतं मन्मतेशो मन्मथः सर्व्वप्राणिहृदन्तर्व्वर्त्तिपरमात्मा स एवोत्पत्तिकारणं यस्योत्पत्तेरीशत्वं तस्यैव स्थितिसंहारयोरपीति जगदुपादानकारणत्वे सिद्धे सर्व्वैर्मुमुक्षुभिः स एक एव उपासनीयः नराणां समूहो नारं तस्मिन् अयनं यस्य स नारायणः मन्मथः तस्य सर्व्वदातृत्वे समर्थतास्तीति तत्स्तुतिं कृत्वा मोक्षप्रदोपि स एवेति सम्यगुक्तं तस्मात् धर्म्मार्थकाममोक्षप्रदातृत्वं तस्य सिद्धं तस्य वसन्तोत्सवादिषु भूषणानि मदनतेजोविजृम्भितं नित्यानन्दतरङ्गं नाम भूषणं (१) हृदयदेशे वर्त्तुलाकारभूषणद्वयंशोभितत्रैलोक्यस्त्रीकदम्बकं यदस्ति तदीयदर्शनस्पर्शनाभ्यां निर-

---

१. नित्यानन्दकरं नाम भूषणद्वयं। वा. पु.।

वधिकानन्दस्य प्राप्ताखण्डानन्दस्य भगवद्रूपत्वेन (१) तत्प्राप्ति-रेव मोक्षः अतो मोक्षकाङ्क्षिणो यूयमपि मन्मथोत्सवभूषण-पुष्पधनुश्चिह्नानि धृत्वा तज्जनितनिरवधिकानन्दप्राप्तिमन्तो मुक्ता भवथेति प्राप्ते श्रीपरमगुरुभिरिदमुच्यते।

भोः कौत्सविदादयः भवदुक्तमसमञ्जसं कथं प्रमाणा-भावात्। तावन्मन्मथस्य सृष्ट्यधिकारः कथं सम्भावनीयः ब्रह्मण एव सृष्टिकर्त्तृत्वदर्शनात् तथैव स्थितिलयकर्त्तृत्वाभावः विष्णु-शिवादितत्कर्त्तृत्वागमादिप्रसिद्धेः। मन्मथस्य नारायणपुत्रत्वात् स्थित्यधिकारः तस्यापि वक्तुं शक्यते इति यदुच्येत तदसमञ्जसं। पुत्रे पितृशक्त्यभावदर्शनात् यथा सूर्य्यपुत्रे शनैश्चरे सूर्य्यप्रभाद्य-दर्शनात् ननु वसन्तोत्सवकालसम्पादितविशेषभूषणधारणं क-र्त्तव्यं तल्लोकत्रितयविद्यमानस्त्रीवशं करोतीति यदुक्तं तत् किं प्रमाणं स्त्रीणां तत्सङ्गिनां सङ्गं दूरतः परिवर्ज्जयेदिति निषेधद-र्शनात् किञ्च मन्मथस्य स्त्रीपुरुषमोहकारकशक्त्यभावात् तदुपा-सनं व्यर्थं कथं रुद्रकालाग्निना भस्मीभूतस्य जगत्सम्मोहनवशत्वा-भावात् तथापि तत्सम्भवोऽस्तीति यदुच्येत तर्हि आकाशस्यापि

---

६ निरवधिकानन्दस्योत्पत्तिरखण्डानन्दस्य भगवद्रूपत्वेन। स. पु.। का. पु.।

कार्य्यकारणताप्रसक्तिः तस्मात् अनङ्गस्य मोचहानिप्रपञ्चे (१) अनवकाशे प्राप्ते परमेश्वरवराद्रतिदेवीप्रार्थनया तस्मात्र-मस्तीति कल्पनीयं तादृशस्य प्रद्युम्नस्य कथं स्रष्टृत्वादिकर्तृत्वं शक्यं सम्पादयितुं अतः प्रत्यक्षविरुद्धं भवन्मतमप्रमाणमित्युक्ताः कौसुम्भविदादयः परमगुरुं नत्वा त्यक्तलिङ्गाः शुद्धाद्वैतवृत्त्या-श्रिताः पञ्चपूजापराः सत्कर्मशीला बभूवुः।

इत्यनन्तानन्दगिरिकृतौ मन्मथमतनिवर्हणं नामैकत्रिंशं प्रकरणं ॥ * ॥

१ मोक्षादिप्रपञ्चे। वा. पु.।

## द्वात्रिंशं प्रकरणं

तस्मादुत्तरमार्गमाश्रित्यालकापुरं प्राप्य तत्र यक्षालयं
नाम प्रसिद्धं देवस्थानमाश्रितः। यत्र कालमाश्रिते सर्वदिव्यजन-
कृतपूजाचमत्कारधुरीणे (१) जगद्गुरावाचार्ये समागते तत्रस्थ-
ब्राह्मणाः कुबेरोपासका नवनिधानस्वर्णमुकुटिकामाणिक्यापरि
शोभितमस्तकाः कुबेरस्येव परार्द्धैश्व-(२)-प्रमुखाः स्वामिनं नत्वेद-
मूचुः स्वामिन्मदीयमतमतिविचित्रतरं किल यस्मात् मम स्वामी
कुबेरः तस्य नवनिधानेशत्वात् लोके तदतिरिक्तपूर्णधनाभा-
वात् सर्वार्थवता जितनिमित्ति वचनाच्च कुबेरभक्तानामस्माकं द
रिद्रादिदोषाभावात् पूर्णानन्दत्वं सिद्धं तस्य ब्रह्मरूपत्वात् तदेव
मोक्षप्राप्तिः कर्मसिद्धेरप्यर्थमूलकत्वात् नहि तदतिरेकेणार्थसिद्धि
रपि विद्यते अतोऽर्थस्य कर्मज्ञानमूलकत्वं तदधिपतेः कुबेरस्यो
पासनकर्म मुमुक्षुभिश्च कर्त्तव्यमिति सिद्धं।

---

१ पूजाधिकारधुरीणे। तै. पु.।

२ कुबेरस्य परार्द्धश्च। स. पु.। का. पु.।

किञ्च दिक्पालानां मध्ये कुवेरस्य श्रेष्ठत्वं विद्यते याव-दभीष्टमर्थं इन्द्रादीनां ब्रह्मविष्णुरुद्रादीनाञ्च स एव ददातीति मर्त्यलोकपाताललोकस्थानामपि स्वदाता स एव तस्य तत्स्वामित्वात् तत्परिचारकपुरसुन्दरीनामप्य-चिण्युपासनेनापि महदैश्वर्य्यस्य सत्त्वात् किं रिक्थो-पासनेन शक्यं वक्तुं धर्मार्थकामामोक्षरूपपुरुषार्थजनक-रिक्थस्वामित्वं विना केचिन्मन्दमत्यः तदन्यदेवताराधनं कुर्व्वन्ति तदविवेककारणं पूर्व्वजन्मसञ्चितपापमतः कृत-व्रतानां हि धनमकृतव्रतानां कुत इति वचनबलात् कुवेरोपा-सनं मुक्तिकाङ्क्षिणो भवन्तोऽपि कुर्व्वन्तीति प्राप्ते।

श्रीमदाचार्य्यैरिदमुच्यते भोः कुवेरस्वेशपरार्द्धेशाः (१) युष्मन्मतमसमञ्जसं प्रमाणाभावात् कुवेरस्यार्थस्वामित्वे सिद्धे नहि तेन कस्मैचिदर्थो दत्तः निधानागतार्थेन कश्चिन्न विद्यते लोके दैवात् पूर्णादर्थवतः पुरुषस्यार्थनिष्पन्नत्वात् रागाद्य-रिषड्वर्गस्य स्थानत्वात् धर्मलेशोऽपि नास्त्येव ज्ञानाद्यस्य मोक्षस्यावकाशः सुतरां नास्त्येवेतिसिद्धमेव अतोऽर्थस्यानर्थरूपत्वात् मुमुक्षूणां द्रव्यं परित्याज्यमेव।

> अर्थमनर्थं भावय नित्यं
> नास्ति ततः सुखलेशः सत्यं।
> पुत्रादपि धनभाजां भीतिः
> सर्व्वत्रैषा विहिता रीतिः॥

---

१ कुवेरेश परार्द्धेशाः। स. पु.। का. पु.।

इत्याचार्य्योक्तेः धर्म्मोऽपि साध्य इति चेत् भवतु नाम प्राक्कर्म्मवशात् कुबेरनिधानार्थं विना द्रव्यं तदेव विवेकिनां धर्म्मकारणं निधानव्यतिरिक्तद्रव्यस्य भूगर्भनिविष्टत्वात् जनाः खनित्रैकता दिरूपेण स्वर्णं बहुधा सम्पादयन्ति तेन केचिज्जीवनं कुर्व्वन्ति केचिद्भूषणानि धारयन्ति कुबेरद्रव्येणेन्द्रादयोऽप्युपजीवन्तीति यदुक्तं तदसत् कनकमयमेरुप्रदेशविलसदिन्द्रादयः स्वतन्त्र-पुरुषाः सर्व्वसुखभाजः सर्व्वैरन्त्यैश्वर्य्यसम्पन्ना दीना इव निर्भाग्या इव किं कुबेरं याचन्ते भवदज्ञानवाक्यानां प्रामाण्याभावात् किमुत्तरं वक्तव्यं ब्रह्मविष्णुरुद्राणां द्रव्यदाता कुबेर इत्युक्तं भवत्यष्टमार्गः केन परिहर्त्तव्यः हिरण्यगर्भस्य ब्रह्मणः लक्ष्मी-पतेर्नारायणस्य हिरण्यरेतसो रुद्रस्य द्रव्ययाचनां सम्पादितस्य तवापवादोपदेशः किमन्यः कार्य्यः एवं समर्थतरेण भवता कुबेरेण मर्त्यलोकस्थेषु निरर्थापवादपरम्परा सदैव कृता भाति (१) भवतस्तिलकमशकजिह्वायां न किमन्यदुचितं अतोमद्वाक्यात्(२) मूढतराः कुबेरशिष्यैः सह विगतलिङ्गस्त्वमद्वैतविद्यामाश्रित्य स्नानादिनित्यकर्मासक्ताः पञ्चपूजापरायणाः भवत इत्युक्ता-

---

१ सदैवकृता भवति । वा. पु. । सदैवकृतार्थाभवेति । स. पु. ।

२ भवतस्तिलकमशकजिह्वया न किं कमनममुच्चरितं । ततः पतितवाक्यात । सै. पु. ।

कुवेरादयः त्यक्तनवनिधानचिह्नाः परमगुरुपादाम्बुजासक्ताः ब्रह्माद्वैतविद्याश्रिता बभूवुः।

इत्यनन्तानन्दगिरिकृतौ कुवेरमतनिवर्हणं नाम द्वात्रिंशं प्रकरणं ॥ * ॥

## त्रयस्त्रिंशं प्रकरणं ।

इन्द्रप्रस्थपुरं प्रसिद्धमखिलैः शिष्यैः समेतः परः
प्राप प्रौढमहीसुराः पुरगताः सम्वीक्ष्य नत्वा गुरुं ।
श्रोतव्यं मतमस्मदीयममलं [illegible] धीश्वरे-
णेन्द्रेणैव हि निर्मितं फलमदस्त्वीयमत्यद्भुतं ॥

पुनः परमगुरुमाचार्य्यस्वामिनं नत्वा ते किञ्चिदमूचुः स्वामिन्मदीयमताधिदैवतमिन्द्रः सर्वैर्निर्जरैर्नमित चरणाम्बुजः स एव जगदुपादानकारणं किला- तत्सदंशा एव ब्रह्मादिविष्णुशिवाः ब्रह्माण्डादिकारणशब्द- वाच्योऽपि स एवेति प्रतिपादितं नारायणोपनिषदि स ब्रह्मा स शिवः स हरिः सेन्द्रः सोऽक्षरः परमः स्वराडिति कैवल्यो- पनिषदि च स एव विष्णुरित्यादि तस्य चतुर्दशलोकेश्वरत्वा त्सर्व्वप्रदातृत्वं त्रिकाण्डे (ऋक् संहितायां) ऽभिहितं इन्द्र श्रेष्ठा नि द्रविणानि धेहि चित्तं दक्षस्य सुभगत्वमस्मे पोषं रयी- णामरिष्टिं (१) तनूनां स्वात्मानं वाचः सुदिनत्वमह्ना- मिति इन्द्रो राजा जगतोपदेशे (२) इतिच तस्मादिन्द्रस्य

---

१ तस्मै पोषं रयीनामरिष्टं । वा. पु. । मस्मै पोषं रयि नामरिष्टं । कै. पु. ।

२. जगतोपदेशे । स. पु. ।

सर्व्वदेवोत्तमत्वं प्राप्तं किञ्च इन्द्रस्य श्रेष्ठत्वद्योतकानि बहूनि सन्ति तथाहि इन्द्रानुजो नारायण एव उपेन्द्रनामा-वसति कनकाचले स्थानं जरामरणरहितममृतं दृष्टार्थदः काम-धेनुः कल्पवृक्षः चिन्तामणिरैरावतश्च उच्चैःश्रवःप्रमुखं वाहनं सेवकास्त्रयस्त्रिंशत्कोटिदेवाः कार्य्यसहायाः सगणाः चित्रभा न्वादि दिक्पालकाः तस्यैव ब्रह्मविष्णुशिवात्मकत्वात् सृष्ट्यादि-कर्तृत्वमिन्द्रः । इदवर्णेनेमं लोकं द्रावयति स्वशक्तिभिरिति इन्द्रः स एव सर्व्वात्मा गुणातीतः परात्परतरश्च तद्वशात् अह ङ्कारादि तद्वाराप्रपञ्चप्रवृत्तिरिति ऊर्ध्वरेतस्कानां यतीनां स एव शिक्षां करोति अधोमुखान् यतीन् सालावृकेभ्यः प्रायच्छदि न्द्र इति अतः सर्व्वनियन्ता सर्व्वकारणं सर्व्वातीतः स एव सर्व्व मायया प्रविष्टः जगत्याकाशवदभिन्नरूपेण सर्व्वैरुपास्य इव वर्त्तते तस्माच्च श्रेयस्कामिभिः भवद्भिरपि स एव वेदितव्यः धर्मार्थ कामभोगादिकानां तत्तद्रूपार्थसिद्धिं स एव करोतीति निरवद्यं। वयं किल बहुजन्मतपःफलितकायाः जीवन्मुक्ताः किले न्द्रोऽहमिति तत्त्वात्मोपदेशवशात् इन्द्रपरमात्मानो बहुजन्म तपःप्राप्तपरानन्दकरलसन्मुक्तिफलाः भद्रहरिजिष्णुहरि भद्रेन्द्रशचीपतिसरस्वतीपत्यादयो वयमिति सम्यक् पूर्व्व पक्षे प्राप्ते ।

परमगुरुभिरिदमुच्यते । भो भद्रहरिप्रमुखा भवन्म-तमसमञ्जसं । कथं प्रमाणाभावात् । इन्द्रशब्दस्य ब्रह्मादि-शब्दान्तःपातित्वेन इन्द्र एव जगदुपादानकारणमिति नार-

यणीय श्रुत्या प्रदर्शितमिति भवद्भिरुक्तं तदयुक्तं। सदेव सोम्येद-
मग्र आसीदित्यादि जगत्कारणवाक्येषु प्रतिपादितं यद्ब्रह्म
तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इत्यादि ब्राह्मणोक्ता नित्य-
शुद्धबुद्धमुक्तस्वरूपं सर्व्वज्ञं सर्व्वजगदुपादानकारणमद्वितीयं
बोध्यते स ईक्षत लोकान्नु सृजा इत्यादिना जगन्निर्माणार्थं स
परमात्मा ईक्षत इक्षां कृतवान्। या भगवद्भिरुक्ता सैव प्रकृतिः
तया किल महदादितत्त्वपूर्व्वकं जगत् सृष्टं तत्राहङ्कारतत्त्वे
गुणत्रयात्मके ब्रह्मविष्णुरुद्राः संप्रसूयन्ते यत इति ते किल
जगत्सृष्ट्यादिकर्त्तारः तत्र सृष्टिकर्त्तुः ब्रह्मणो मुखादिन्द्राग्नी
जायेते यदा विराण्मुखा भवन्ति तादृगिन्द्रस्य जगदुपादानका-
रणे प्रोच्यमाने तदन्यैर्दिक्पालैः किमकार्य्यं कृतं सर्व्वप्रदातृत्व
मिन्द्रस्य वर्त्तत इत्युक्तं। सर्व्वेषां जन्तूनामपि तत्तदधिकार-
योग्यतादातृत्वमस्त्येव किन्तेन ब्रह्मत्वमस्ति जरामरणरहित-
ममृतसेवनमस्ति तेन ब्रह्मत्वमित्युक्तं भवदज्ञानं केन वारयितुं
शक्यं। तथाचेदममृतपानं येषां विद्यते तेषां ब्रह्मत्वप्राप्त्या ब्रह्मा
नन्त्यप्रसक्तिः एकमेवाद्वितीयं ब्रह्मेत्यादि श्रुतयः व्यर्थाः स्युः
किञ्च सहस्रयुगात्मके ब्रह्मदिने किल इन्द्राश्चतुर्द्दश। एक-
स्येन्द्रानुपाततः साधितस्य कालस्य प्रमाणं घटिकादि। २।८।१४

अतो ब्रह्मदिनचतुर्द्दशांशानुजीविनः स्वर्गराजस्य एक
सप्ततिमहायुगाधिपत्यस्य कथं ब्रह्मत्वं वक्तुमुचितं।
स्वमानेन ब्रह्मणः शताब्दायुषि पूर्णे पृथिव्यास्तोये विल
यस्तस्याग्नौ वह्नेर्वायौ वायोराकाशे तथा ब्रह्मणि लयः

ब्रह्मणो यथा देवा: इन्द्रादिदिक्पालप्रमुखा उत्पन्ना:, निवृत्ता-वपि तथैव ब्रह्मणस्तदङ्गं प्रविशन्ति, एवं सर्व्वलोकदेवलयस्थानं ब्रह्मापि नारायणे विलीन: स्यात्, तस्य रुद्रे, तस्य च महत्तत्त्वे, तस्याऽव्यक्तप्रकृतौ, सा गुणरहितचिदानन्दमये परमात्मनि लीना सन्मात्ररूपेणावतिष्ठते। तदानीं "सदेव सौम्येदमग्र आसीत्" "ब्रह्म वा इदमग्र आसीत्" "आत्मा वा इदमेक एवाग्र आसीत्" इत्यादि ब्रह्मकारणवाक्यानि प्रवृत्तानि। "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व, तद्ब्रह्मेति"। "सत्यं ज्ञानमनन्तं ब्रह्मेति" "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" इत्यादि श्रुतय: प्रमाणानि। तस्मात् भद्रहरिप्रभृतयो मूढा: यूयं शुद्धाद्वैतविद्याश्रिता: विगतलिङ्गा भवतेति सम्यगु-पदिष्टास्ते परमगुरुं नत्वा स्मार्त्तकर्म्मशीला: पञ्चपूजापरायणा: शुद्धविद्याश्रिता बभूवु:॥

इत्यानन्दगिरिकृतौ इन्द्रमतनिवर्हणं नाम त्रयस्त्रिंशत्प्रक-रणम्॥ * ॥

## चतुस्त्रिंशत्प्रकरणम् ।

---

तस्मात् यमप्रस्थपुरं हि प्राप
सर्व्वात्मकः सद्गुरुराद्यशिष्यैः ।
आढ्यो यथा सर्व्वगुणैरुपेतः
पुरन्दरः सर्व्वसुरैरिवाभोत् ॥*

तत्र किल मासकालमास्थिते परमगुरौ यमोपासकाः महिषरूपतप्तलोहाङ्कितभुजद्वयाश्चित्रमहिषवेशं कृत्वा नाट्यमाचरन्तः सङ्गायन्तो यमदेवं पुरस्कृताः सम्यगागत्य स्वामिनं नत्वेदमूचुः, स्वामिन्नहं किल किङ्करनामा, मच्छिष्याः सन्ति बहुला यमदृढकिङ्करतरुणदूतादय, सर्व्वे यमपरायणाः यमस्यैव लयहेतुत्वेन सृष्टिस्थित्योरपि स एव कारणमिति कृत्वा तस्यैव सर्व्वोत्कृष्टत्वं वर्त्तत इति निश्चित्य तदुपासकानामस्माकं मुक्तिरेव भविष्यतीति निर्भीत्या जन्ममरणप्रवाहमुल्लङ्घ्य वर्त्तामः । किञ्च यमप्रतिपादिका वागियम्, यमाय सोमं सुनुत यमाय जुहुता हविः । यमं ह यज्ञो यच्छ-

---

* तस्मात् यमप्रस्थपुरं प्राप सर्व्वात्मकः सद्गुरुराद्यैः शिष्यैर्यथा सर्व्वगुणैरुपेतः पुरन्दरः इत्यादि । वा॰ पु॰ ।

त्यग्निर्ह्रुतो ऽरं कृत इति। एतदर्थ एवमुन्नेयः, सोमं यागद्रव्यं यमाय सुनृत वह हविश्च* यमाय जुहुत कस्मादित्युक्तेः, यज्ञः श्रौतः स्मार्त्तो वा यमं गच्छति, ह्यशब्दो निश्चयार्थः, अरमलमग्निरेव कृतः यमो नेति शेषः। एवं यज्ञभुजो यज्ञरूपस्य यमस्य सृष्ट्यादिकारणस्य परब्रह्मत्वे सिद्धे तन्मूर्त्तिर्द्विधा भवति शुक्लकृष्णभेदात्, या शुक्ला सा परब्रह्मरूपा, यच्छुक्लं "तद्ब्रह्मेति" श्रुतेः। तस्मान्निर्गुणाद्यमादाविर्भूतमहत्तत्त्वादिद्वारा रुद्राख्यो यमावतारः, तस्माज्जातः कृष्णवर्णो यमः सर्व्वव्यापकः विष्णुसञ्ज्ञः, तन्नाभिकमले जातो रक्ताधिकत्वाद्रक्तवर्णाख्यो ब्रह्माख्यो यमः, तद्द्वारा किलाष्टदिगीशाः सूर्य्यादिग्रहाः सर्व्वचराचरात्मकं जगदिति कृत्वा स्वयं पुण्यपापकर्म्मोपाधिद्वारा सर्व्वप्राणिशिक्षां कुर्व्वन् दक्षिणदिक्पाचेश्वरदण्डपाणिर्महिषवाहनारूढो यमदेवो वर्त्तते वेशधारीव। निजसत्यज्ञानानन्तलक्षणं विहाय किञ्चिज्ज्ञ इव इन्द्रादीनां स्वांशानां मध्ये स्वयमपि किञ्चिदिव लक्ष्यते, भस्मान्तर्गताङ्गार इव, पवनान्तर्गताग्निरिव समुद्रान्तर्गतवाडव इव, मेघान्तर्गतजलमिव, जडान्तर्गतात्मेव, घटान्तर्गतदीप इव, सरोऽन्तर्गतपद्ममिव भाति। तस्मात् जगत्कारणवाक्याभिप्रायरूपं शुद्धबुद्धमुक्तस्वरूपं ब्रह्म यमस्तस्यांशः सगुणः, शुद्धयमोपासनायाः† कर्त्तुमशक्यत्वात्।

---

* यमाय सुनुत हविश्चेति क्वचित् पाठः।

† सुक्तयमोपासनाया इति क्वचित् पाठः।

सगुणनीलवर्णयमोपासनमस्माभिः क्रियते तेन मूलाज्ञानंनि-
वृत्तौ यम एव सर्व्वमिति बोधोत्पत्त्यनन्तरं शुद्धयमप्राप्तिरेव
मोक्ष इति च। तस्मात् यूयं मोक्षकाङ्क्षिणः किल तस्मात्
यमोपासनं कुरुध्वं तत्कटाक्षलेशेनैव मुक्तिर्वो भविष्यतीति प्राप्ते
परमगुरुरेवं पठति, भोः किङ्करादयः शृणुध्वं यूयं, भवन्मत-
मनर्हं, कथं, श्रुत्यादिसर्व्ववाक्प्रपञ्चविरुद्धत्वात् तावद्वेदनिर्ब
एव भवति। पुरा नचिकेताः किल पितृशापात् यमपुरं प्राप्तः,
तद्द्वारे त्रिरात्रमनशनवृत्त्यैव उवास, तं सूर्य्यवर्च्चसं नचिकेतस-
मतिथिं दृष्ट्वा वेपमानशरीरो यम इदमुवाच, "तिस्रो रात्री-
र्यदवात्सीर्गृहे मेऽनश्नन् ब्रह्मन् अतिथिर्नमस्यः। नमस्तेऽस्तु
ब्रह्मन् स्वस्ति मेऽस्तु तस्मात् प्रति त्रीन् वरान् वृणीष्वेति"।
एवं नमःपुरःसरं यमेनादरेणोक्तः नचिकेताः किल वचन-
मुवाच। "शान्तसङ्कल्पः सुमना यथा स्यात् वीतमन्युर्गौतमो
माऽभिमृत्यो त्वत्प्रसृष्टं माऽभिवदेत् प्रतीतः एतत्त्रयाणां प्रथमं
वरं वृणे" इति नचिकेतसोक्तो मृत्युः पुनराह, "यथा पुर-
स्तात् भविता प्रतीत औद्दालकिरारुणिर्मत्प्रसृष्टः, सुखं रात्रीः
शयीता वीतमन्युः त्वां ददृशिवान् मृत्युमुखात् प्रमुक्तं, स्वर्गे
लोके न भयं किञ्चनास्ति न तत्र त्वं न जरया बिभेति,
उभे तीर्त्वा अशनायापिपासे शोकातिगो मोदते स्वर्गलोक
इति" पितृसौमनस्यकाङ्क्षिणो नचिकेतसः तत्पितुश्च जरादि-
दोषविहीनं स्वर्गलोकप्राप्तिरूपं फलं शान्तसङ्कल्पविग्रहादिफलञ्च

सम्यक्प्रदं मृत्युं नचिकेताः पुनराह द्वितीयं वरं, "स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यं, स्वर्गलोका अमृतत्वं भजन्त एतद्द्वितीयेन वृणे वरेणेति" नचिकेतसा पृष्टेन यमेन प्रोक्तो द्वितीयवरस्तेताग्निरूपः, "त्रिणाचिकेतः त्रिभिरेत्य सन्धिं त्रिकर्म्मकृत्तरति जन्ममृत्यू ब्रह्मयज्ञं देवमीड्यं विदित्वा निचाय्येमां शान्तिमत्यन्तमेतीति"। एवमुक्तो नचिकेताः तृतीयवरप्रार्थनामेवमकरोत्, "येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके, एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः" इति पृष्टः यमस्तद्वरस्य रहस्यतत्त्वगोचरत्वात् बहुधा द्रव्यवाहनमतिचिरायुः पुत्रसुखं* फलं दास्यामि तृतीयवरार्थमिति बहुधा लोभयित्वा पश्चान्निराशालोभनीयं नचिकेतसं दृष्ट्वा प्रणम्य इदमाह "सर्व्वे वेदा यत्पदमामनन्तीति, तपांसि सर्व्वाणि च यद्वदन्ति यदिच्छन्तो ब्रह्मचर्य्यं चरन्ति तत्ते पदं संग्रहेण प्रब्रवीम्योमित्येतदिति।

अशरीरं शरीरेषु अनवस्थितमीश्वरं †।
महान्तं विभुमात्मानं मत्वा धीरो न शोचतीति" च॥

"यस्य ब्रह्म च क्षत्रञ्चोभे भवत ओदनं मृत्युर्यस्योपसेचनं क इत्था वेद यत्र स इति"। जाग्रदाद्यवस्थासाक्षी स्वयमशरीरः

* शतायुः पुत्रसुखं इति क्वचित्पाठः।

† अशरीरं शरीरेषु अनवस्थेष्ववस्थितमिति भाष्यसम्मतः पाठः।

गाऽक्रथमश्नोजोमयम्नगीयः परमात्मा मूर्ध्नि पूर्णमण्डलाकारेण विराजमानः सर्व्वातीतः सर्व्वकारणं परं ब्रह्मास्ति तस्य गुणातीतत्वेन सर्व्वोत्कृष्टत्वेन च तदुपासनमत्यन्तगहनमपि तदधःप्रदेशवर्त्तमानपरमाङ्गुष्ठमात्रपुरुषे यो मनोलयं करोति स मुक्त इति। किञ्च सर्वसंहारकर्तृत्वं तस्य प्रतिपादयति ब्रह्मक्षत्राद्युपलक्षितं जगन्मृत्युरूपसेचनमिति च सम्यगुपदिष्टो नचिकेताः कृतार्थो भूत्वा पितरं प्राप यमस्यैव परब्रह्मत्वे प्रोच्यमाने स्ववाक्योऽप्रामाण्यप्रसक्तिः यस्यात्मनो जगदन्नं मृत्यु-रूपसेचनमिति तस्यैव स्वोपसेचनत्वविरोधात्। अतो यमान्यद् ब्रह्म सर्वकारणं परिकल्पनीयं। यमादीनां किञ्चिज्ज्ञत्वेन यमाद्युपास्यं ब्रह्म सगुणं सर्वकारणञ्च निर्गुणं परं ब्रह्म सदेव सौम्येदमग्र आसीदित्यादिकारणवाक्यप्रतिपादितं। सगुणं सृ-ष्ट्यादिकारणं ब्रह्मविष्णुशिवात्मकं, अतो लयमूर्त्तेः शिवस्य महदुदरं प्रलये चतुर्मुखादयो देवा इन्द्रादिदिक्पतयः सूर्य्यादिग्रहाः पृथिव्यादिभूतानि चराचरं सर्व्वमपि जगत् प्रविशन्ति तदानीं किल सर्व्वजगद्रूपान्नभक्षणकाले उपसेचनं नाम उपदेशो यमो भविष्यति तत्तादृग्यमस्य लिङ्गादि-धारणेन मुक्तिरिति अनृतमुक्तं भवता यमादिगुरुणा कि-ङ्करेण। पुराणेष्वपि मार्कण्डेयादिषु यमार्द्दितेषु शत्रुसूदनो भक्तवत्सलो महादेवः स्वतन्त्रो यमं निष्पीड्य भक्तपालनम-करोदिति महापातकिनः सुन्दरनाम्नो ब्राह्मणस्य यमदूते-

राक्रम्यमाणे जीवे धनलोभात् कृतैकशिवरगविजागरणफल-तुष्टमहादेवदूतैः सर्वोत्कृष्टबलवद्भिस्ताडिता यमदूताः सुन्दरं परित्यज्यापलायन्त। शिवदूतैर्नीतः सुन्दरः शिवभक्ताग्रगण्य इव कैलासे वर्त्तमानः इति च पुराणेषु वर्त्तते। अजामिलो ब्राह्मणकर्म्म परित्यज्य चण्डालीसंसर्गतः पुत्रान् पञ्च लब्ध्वा कनिष्ठनारायणाख्यपुत्रनामोच्चारणात् त्यक्तकलेवरस्य ब्राह्मणस्य सूक्ष्मशरीरे यमदूतैर्नीयमाने बलाढ्या विष्णुदूताः समागत्य अजामिलं स्वर्लोकं प्रापयन्ति स्म, दुर्व्वलिनस्तु यमदूतास्तैर्भग्नकलेवरा रुदन्तः सन्तो यमलोकं गताः इति वर्त्तते। तस्मात् यूयं किङ्करादयस्त्यक्तलिङ्गाः शुद्धाद्वैतविद्यामाश्रित्य स्नानसन्ध्यावन्दनस्वाध्यायपितृतर्पणवैश्वदेवातिथिपूजादिकं कर्म्म समाचरथ। एवं निष्पापात्मानः सद्गुरूपदेशात् ब्रह्मस्वरूपं ज्ञात्वा मुक्ता भवथ इत्युक्ताः किङ्करादयः परमगुरुं नत्वा शुद्धाद्वैततत्त्वाश्रिताः सच्छिष्या बभूवुः॥

इत्यानन्दगिरिकृतौ यममतनिवर्हणं नाम चतुस्त्रिंशत्प्रकरणं॥ ०॥

---

पञ्चत्रिंशत्प्रकरणम् ।

---

तस्मात् प्राप प्रयागाख्यं स्थलं पुण्यविवर्द्धनम् ।
गङ्गाया यमुनायाश्च सरस्वत्याश्च सङ्गमम् ॥

तत्र परमगुरौ समास्थिते वरुणोपासकाः पाशचिह्ना वायूपासका ध्वजाचिह्नाः भूमिदेवोपसकाः पूर्णाङ्कास्तीर्थोपासका विन्दुचिह्नाश्च समागताः। समागत्य तीर्थपतिप्राणनाथानन्तजीवनदाख्याः स्वशिष्यैः सहेदमूचुः, स्वामिन्नाचार्य्य मदीयमतमतिविचित्रमत्यन्तपुण्यदं शृणु । अहं किल तीर्थपतिः, मदीशो वरुणः सर्वदेववन्दितचरणारविन्दः सर्वेषां जीवन इति च सर्वोत्कृष्टः स एवोपासनीय इति। ततः प्राणनाथः स्वामिनं नत्वेदमाह, स्वामिन् मन्मतेशो वायु किल सर्वदेहप्राणरूपः स एक एव लोकैरुपासनीयः । "ये प्राणं ब्रह्मोपासते" "प्राणो हि भूतानामायुरिति" श्रुतेः । अतः प्राणोपासकानामस्माकं तदङ्कपरिशुद्धगात्राणां न विचारः कर्त्तव्यः किल इहामुत्र च। ततः परमगुरुमनन्तो नत्वेदमुवाच, स्वामिन् मदीयमतमुत्तमं, भूमिः किल सर्वकारणम् । "स्योनापृथिवी भवानृक्षरा निवेशनीया स्वा नः शर्म्म

सम्भवा" इति श्रुतेः. भूमेः. सर्व्वाकाशत्वात् सर्व्वदेवमयत्वाच्च तदुपासकानामस्माकमिहामुत्रापि न विचार इति। ततः स्वामिभिर्जीवनदोनत्वेदमुवाच, स्वामिभवन्मतमतिविचित्र-तरम्। तीर्थस्य ब्रह्मरूपत्वात् तदुपासनमेव सर्व्वैर्मुमुक्षुभिः कर्त्तव्यं, तद्व्यतिरिक्तपरमाभावात् त्रिवेणीतीर्थविन्दुसेवनमा-त्रेण ब्रह्महत्यादिदोषशान्तिर्भवति। दर्शनमात्रेणैवेति केचि-द्वदन्ति, "अम्ब त्वद्दर्शनान्मुक्तिर्न जाने स्नानजं फलमिति" नारदोक्तेः। किञ्च उदकस्यैव सर्व्वात्मकत्वं श्रुत्या दर्शितम्, "आपो वा इदं सर्व्वं विश्वा भूतान्यापः प्राणोऽवर्णवः*। आपः पशवः आपोऽन्नमयोऽमृतमयः सम्राडापो विराडापः। स्वरा-डापो वा छन्दांस्यापोज्योतींष्यापोयजूंष्यापः" इत्यादितः सर्व-मयत्वे तीर्थस्य ब्रह्मत्वं सिद्धम्। तदुपासकानामस्माकमिहा-मुत्र न विचारः कर्त्तव्य इति। तस्माद्भवन्तोऽपि मोक्षका-ङ्क्षिणः सर्वदा तीर्थोपासनं कुरुध्वमिति प्राप्ते परमगुरुभिरे-वमुच्यते, भोस्तीर्थपतिप्राणनाथानन्तजीवनदाख्याः शृणुध्वं, युष्मन्मतानि अप्रमाणानि, जगत्कारणवाक्यविरुद्धत्वात्। प्रथमं वरुणोपासनमनुचितम्, तस्य जगत्कारणत्वाभावात्। तथा वायोरपि परमत्वाभावः, क्षरपञ्चभूतान्तःपातित्वात्। भूमे-रपि तद्वज्जन्यत्वदर्शनात् यज्जन्यं तदनित्यमिति, मानम्। "आत्मन आकाशः सम्भूतः, आकाशाद्वायुर्वायोरग्निः, अग्ने-

---

* प्राणा आपोऽर्णव इत्यपि पाठः।

रापः, "अग्नः पृथ्वी" इति श्रुतेः तीर्थस्यानित्यता; किन्तु भूतानां मध्ये तीर्थस्योत्तमत्वं वर्णयति, "आपो वा इदं सर्व्व-मिति"। त्वरज्ञानेनाचरपरब्रह्मप्राप्त्यभावाद् युष्माकं कथं मुक्तिरस्ति। तदभावाज्ज्ञानस्यापि फलाभावो वक्तव्यः, उपास्यानामनित्यत्वात्। तस्मान्मोहबुद्धिं परित्यज्य शुद्धाद्वैतविद्यानिरता भवथ। विश्वतैजसप्राज्ञातीतपरमाङ्गुष्ठमात्रब्रह्म-द्वारा मनोलयानन्तरं पूर्णमण्डलाकारं शुद्धं ब्रह्म प्राप्य मुक्ता भवथ इत्याज्ञप्ताः परित्यक्तलिङ्गाः शुद्धाद्वैतविद्याश्रिताः शिष्या बभूवुः॥

इत्यानन्दगिरिकृतौ वरुणवायुभूम्युदकसेवकमतनिवर्हणं नाम पञ्चत्रिंशत्प्रकरणम्॥ ३५॥

षट्त्रिंशत्प्रकरणम्।

---

एवं निराकृतेषु पुनरन्यः शून्यवादी प्रत्यवतिष्ठते। स किल स्वामिनं प्रणम्येदमुवाच, मम मतं सुखदं, तथाहि मया मार्गे किञ्चिद् दृष्टं तत्सावधानेन शृणु।

मृगतृष्णाम्भसि स्नातः खपुष्पकृतशेखरः।
एष बन्ध्यासुतोयाति शशशृङ्गधनुर्द्धरः॥
तं दृष्ट्वा देवभावेन प्रणम्य शिरसा भृशम्।
आगतोस्मि यतिश्रेष्ठ तवान्तिकमहं द्रुतम्॥

इति श्रुत्वा भो विचित्रतर त्वन्नाम किम् इत्याचार्यैरुक्तः स तु पुनरुवाच, स्वामिन्नहं निरालम्बनामा, मत्पिता कल्पितरूपनामा, मन्माता निर्भरिता, इति निशम्य परमगुरुरिदमाह, भो निरालम्ब भवन्मतमसमञ्जसम्। कथं। तस्य शून्यत्वात्, शून्यस्यैव परब्रह्मत्वमिति यदुच्यते तदयुक्तम् "तमेव भान्तमनुभाति सर्वमिति" श्रुतेः। सूर्यकोटितेजोरूपस्य ब्रह्मणः शून्यत्वं वक्तुमनुचितं, तदधिकतत्समतत्स्वरूपाभावा-

c 2

देकमेवाद्वितीयं ब्रह्म सर्वैरुपासनीयमिति सिद्धान्तः। तस्मा-न्मूढबुद्धिं परित्यज्य शून्यमतं त्यक्ता शुद्धाद्वैतविद्याश्रितो भव इति नियमितो. निरालम्बः पुनराह, स्वामिन् आ-काशस्य ब्रह्मत्वं युक्तं किल। कथं। व्यापकत्वाद्वेदमूलक-त्वाच्च। तथाहि। "आकाशो ह्येतेभ्यो ज्यायानाकाशः परा-यणमाकाशं प्रत्यस्तं यन्तीति"। किञ्च वेदान्ते "ॐ आकाश-स्तल्लिङ्गात्" इत्यधिकरणे आकाशस्य ब्रह्मत्वप्राप्तिर्निर्द्धारिता। अतः श्रुतितात्पर्य्याज्ज्यायस्त्वपरायणत्वे निर्द्धारिते। "आकाशं प्रत्यस्तं यन्ति" इत्यादिना लयस्थानञ्चाकाश एवेति कृत्वा सृष्ट्या-दिकारणमाकाश एव ब्रह्मेति प्राप्तिः। पुनराचार्यैरिदमुच्यते, किं निरालम्ब मूढतम ब्रवीषि, कथमाकाशस्य ब्रह्मत्वमुचितं वक्तुं। आकाशत्ववसलिलांशाभ्यां जातस्य शब्दस्याकाशगुणत्वात्, सगु-णस्याकाशस्य कथं ब्रह्मत्वप्राप्तिः। भूतरूपस्याऽस्याकाशाद्वायुरि-त्यादिश्रुतिसिद्धत्वात् कार्य्यभूतोत्पत्तिलयस्थानमाकाशः किल तस्यापि ब्रह्मजन्यत्वं वर्त्तत एव। किन्तु आकाशशब्दः साधारणे ब्रह्माकाशयोर्वर्त्तते। "यदेष आकाश आनन्दो न स्यात्"। आकाशोऽपि नामरूपयोर्निर्वाहिता ते यदन्तरा तद्ब्रह्मेति ज्या-यस्त्वपरायणत्वादिगुणा अपि भवन्त्येव निर्निमित्ते नभस्यवस्थि-ताः। तथाहि। "ज्यायान् पृथिव्या ज्यायानन्तरिक्षात् ज्या-यान् दिवो ज्यायानेभ्यो लोकेभ्यः" इति श्रुतिः। "विज्ञान-मानन्दं ब्रह्म रातेर्धातुः परायणमिति"। अपि च अन्तर्वत्त्वदो-

येण कालावत्यस्य पचं नुदित्वा अनन्तरं किञ्चिदल्पकामेन शैव-लिना आकाशः परिगृहीतः, तदाकाशमुद्गीथे सम्पाद्योपसंहरति, "एष को वरीयानुद्गीथः स एषोऽनन्त इति ऋचः। अक्षरे परमे व्योमन् सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिता" इत्यादिश्रुतिभ्य आकाशशब्दस्य ब्रह्मपरत्वे निर्द्धारिते शून्यवादिनिगमनामा परमगुरुं नत्वेदमाह, स्वामिन् भवत्पाददर्शनेन कृतार्थोऽहं पुनर्ब्रह्म बोद्धुमिच्छामि, तदुपदेशं कुरु इति जल्पन्तं निरालम्बमिदमाह गुरुः, "ॐ आकाशस्तल्लिङ्गात्" इत्यधिकरणसूत्रवाक्याभ्यां ब्रह्मैवाकाश इति सम्यग्-हृदयकमलाग्रनिःसूक्ष्मविवराकाशोदरगाख्यो ब्रह्म, तदुपास्य त्वं कृतार्थो भवेत्युक्तः शुद्धाद्वैतविद्याश्रितः शिष्योऽभवत् ॥

इत्यानन्दगिरिकृतौ शून्यमतनिवर्हणं नाम षट्त्रिंशत्प्रकरणम् ॥ ३६ ॥ ० ॥

---

## सप्तत्रिंशप्रकरणम्।

---

एवं परिहृते शून्यमते पुनरन्यो बालचन्द्राङ्कविराजमानभुजद्वयः आदिवराहोपासकः स्वामिनं नत्वेदमुवाच। भो यतिश्रेष्ठ कल्पान्ते किल एकीकृतसकलवार्धिजलनिमग्नभूम्युद्धरणहेतुभूतस्यादिवराहस्य मतं मदीयं विद्धि, भगवतो दंष्ट्रादण्डाग्रे सप्तसमुद्रकुलाचलादियुता क्षितिः कमलमात्रं तिष्ठते, तस्मात् सकलजगत्कारणं सगुणनिर्गुणं ब्रह्म सर्वैर्मुमुक्षुभिः स एक एव परायणं, अतो भवन्तोऽपि मोक्षकाङ्क्षिणो दंष्ट्राङ्कयुतभुजाः वराहोपासकाः भवध्वमिति प्राप्ते पठत्याचार्यः, भो वराहोपासक भवन्मतमनर्हं, कुतः वेदविरोधात्, तत्कथं ब्राह्मणेन तपः कर्त्तव्यमित्येव ब्राह्मणलक्षणं शास्त्रे प्रतिपादितम्। "तपो ब्रह्म तपः शौचं तपः सत्यं तपो व्रतं तपः शान्तं तपो दमस्तपः शमस्तपो दानं तपो यज्ञं तपो भूर्भुवर्ब्रह्ममात्रं स्यादेतत्तपः" इति तप एव ब्रह्म, बृहतेर्द्धातोरर्थभूतं कृत्स्नं वस्त्वभिधीयते तत्समाधिकवस्त्वभावात्। ब्रह्मणस्तावदभिन्नवस्तुमात्रमस्ति तेन न ब्रह्मभिन्नो जीव इति। अतो जगदुपादानकारणस्यास्य सृष्टिस्थितिलयाद्या बहवो जातास्तैश्चिह्नैरङ्कनीयमिति यदि प्रामाण्यं तर्हि मत्स्यकूर्मादिचिह्नैः शिरःप्रभृतिगात्रेषु यथाशक्यमङ्क-

नीयं। ब्राह्मणव्यतिरिक्तस्यैवाङ्कनप्रयोजनं न तु ब्राह्मणानां। ब्राह्मणं कर्म कुर्विति तत्प्रयासस्यान्यथासिद्धत्वात्। विप्रोचितं कर्म परित्यज्यादिवराहोपासनं कर्त्तव्यमिति को वाऽशनिपातस्तवागतः। "उदिते सूर्य्ये प्रातर्जुहोतीति" श्रुतिः क्व गता। ब्राह्मणाचारं परित्यज्य शूद्राचारपरिग्रहणं कथं भवता कृतम्। "अहरहः सन्ध्यामुपासीत" इत्यादिविप्रकर्त्तव्यविधिवचनानि तव शिष्याः किं न कुर्वन्ति। सगुणब्रह्मोपासना कर्त्तव्येति चेत् तथापि "ब्रह्मविष्णुरुद्राः सगुणात्मकाः" इति प्रमाणं। तेषामेकतमेनोपासनेन भवितव्यं, किमर्थं तदपि नाङ्गीकृतं भवता। वराहदंष्ट्रादण्डचिह्नं धृतं किमर्थं भवताऽङ्कितं। अतः सदाचारं परित्यज्य दंष्ट्रादण्डाङ्कविराजमानभुजः पशुमार्गेण वर्त्तय, ज्ञानं विना मोक्षाभावः, दण्ड्यस्तावत्त्वम् कर्म्मोल्लङ्घ्य वर्त्तसे, कर्मातिक्रमो दण्ड्य इति मन्वादिकृतधर्मशास्त्रेषु प्रमाणदर्शनात्। तस्मात् स्वयं मूढबुद्धिं परित्यज्य विगतलिङ्गः स्वकुलोचितसत्कर्म्म कुर्वन् वर्त्तय, शुद्धाद्वैतविद्योपदेशं गुरुमुखात् प्राप्य मुक्तो भवसीति सम्यगुपदिष्टो वराहः परमगुरुं नत्वा तन्मुखारविन्दात् पारमार्थिकं ज्ञानं लब्ध्वा लक्ष्मणाख्यः शिष्यतरोऽभवत्॥

इत्यानन्दगिरिकृतौ वराहमतनिवर्हणं नाम सप्तत्रिंशत्प्रकरणम्॥ ३७॥

---

अष्टत्रिंशत्प्रकरणम्।

---

एवमेतन्मते परिहृते पुनरन्यश्चतुर्दशलोकोपासकः कामकर्म-नामा समागत्य यतीशं नत्वेदमाह, स्वामिन् लोकसङ्घ एवे-श्वर इति कृत्वा लोकानामुपासकोऽहम्, लोकानुग्रहादेव सर्व-लोकप्राप्तिफलं सम्यगस्ति, तस्मात् इहामुत्रापि न विचारः कर्त्तव्य इति, भवन्तोऽपि मुक्तिकाङ्क्षिणः सत्यलोकवासेच्छातः प्रतिदिनं लोकोपासनं कुरुध्वम्। प्रसन्ने लोकसङ्घे सत्यलोका-वाप्तिरेव मुक्तिरिति सर्वानन्तफलं प्राप्स्यथ इति प्राप्ते भगवद्भि-राचार्यैरिदमुच्यते, भोः कामकर्मन् मूढतम, नास्ति किन्तव वि-वेकलेशोऽपि। लोकोपासनेन फलमस्तीति भवतोक्तं, तेषां भौ-तिकत्वादनित्यत्वाच्च तदुपासनमनृततरं, जडस्य फलार्पणसामर्थ्या-भावात्, उपासनं कर्त्तव्यं यदि सगुणब्रह्मण एव, तस्यापि फलमस्त्येवेति सम्यगुपदिष्टः कामकर्मनामा परमगुरुं नत्वा त-दुपदेशबलात् अद्वैतवृत्त्याश्रितोऽभवत्॥

इत्यानन्दगिरिकृतौ लोकमतनिवर्हणं नाम अष्टत्रिंशत्प्रक-रणम्॥ ३८॥

---

## एकोनचत्वारिंशत्प्रकरणम् ।

---

एवमेतन्मते परिहृते पुनरन्ये गुणोपासकाः प्रत्यवतिष्ठन्ते, ते किल स्वामिनमिदमाहुः, स्वामिन्, गुणाः किल लोककर्त्तारः ब्रह्मादिदेवकारणं किल, अतो वयं गुणोपासनामात्रेण कृतार्थाः । सर्व्वस्यापि प्रपञ्चस्य गुणमयत्वात् सर्वलोकपूज्यत्वं गुणोपासकानामस्माकमस्ति । तस्माद्भवन्तोऽपि गुणोपासनं कुर्वन्तो मुक्ता भविष्यन्तीति प्राप्ते दुष्टमतशिक्षायै आचार्यैरिदमुच्यते, किमुक्तं भवद्भिर्मूढतमैर्गुणोपासनं कर्त्तव्यमिति, तदनुपपन्नम्, तेषां जन्यत्वात् अशाश्वतगुणोपासनेन किं शाश्वतफलरूपोमोक्षोऽस्ति । तस्मान्मूढबुद्धिं परित्यज्य शुद्धाद्वैतविद्यामाश्रित्य सत्याख्यशिलाविगतवेषभाषा भवथ इति प्रोक्तास्ते कृतविलासाः यतिशिष्या बभूवुः ॥

इत्यानन्दगिरिकृतौ गुणमतनिवर्हणं नामैकोनचत्वारिंशत्प्रकरणम् ॥ ३९ ॥

---

## चत्वारिंशत्प्रकरणम्।

एवमेतेषु गुणोपासकेषु परिहृतेषु साङ्ख्यः प्रधानवादी कश्चित् प्रत्यवतिष्ठते, स त्वाचार्यस्वामिनमिदमुवाच, प्रधानं जगदुपादानकारणं, तस्मिन् साङ्ख्यानां स्मृतिः किल प्रमाणं, मन्वादिस्मृतिवत् तत्स्मृत्यर्थमिव श्लोकरूपेण ऋषिकल्पितमात्रेण* स्मृतिरासीत्। अतो वेदार्थानां प्रमाणभावात् स्मृतिरपि प्रमाणमिति तद्बलात्प्रधानस्य जगदुपादानकारणत्वं सिद्धमासीत्। तत्र किलायं श्लोकः स्मर्यते।

"गुणसाम्यं प्रधानं हि महत्तत्त्वादिकारणम्।
अव्यक्तं व्यक्तभावञ्च जगत्येकं हरात्परम्"॥ इति।
तदुपासनमात्रेण मुक्तिः सन्निहिता नृणाम्॥ इति।
कपिलादिभिराचार्यैरादृतं योगमुत्तमम्। इति च।

तस्मात् साङ्ख्यानामस्माकं प्रधानमेकमेव शरणं मोक्षेच्छूनामिति प्राप्ते श्रीमद्भिरिदमुच्यते, भोः साङ्ख्य भवन्मतमनुचितम्, कथं, प्रमाणाभावात्। स्मृतिः प्रमाणमिति यद्युच्येत

---

* मार्गेणेति क्वचित्पाठः।

तन्न सम्भवति। वेदानुकूलायाः स्मृतेरेव प्रामाण्यात्, वेदगर्हितं साङ्ख्यस्मृतिसिद्धमप्रमाणमेव प्रधानम्, तस्याशब्दत्वात्, ईक्षितृत्वाभावाच्च। अतएवाचार्यैः, ॐ "ईक्षतेर्नाशब्दमित्यधिकरणे, अशब्दं प्रधानं, नहि प्रमाणम्, ईक्षतेरिति भाष्ये प्रतिपादितम्, अचेतनस्य प्रधानस्य ईक्षितृत्वासम्भवात् चैतन्ये ब्रह्मण्येव जगदुपादानकर्तृत्वम्। "आत्मा वा इदमेक एवाग्र आसीत् नान्यत् किञ्चनमिषत् ईक्षत लोकानसृजा" इत्यादि तृतीयकाण्डे "स ईक्षत बहुस्यां प्रजायेयेति सदेव सौम्य इदमग्र आसीत् ब्रह्मा वा इदमग्र आसीत् एको ह वै नारायण आसीत् एको रुद्रो न द्वितीयोऽवतस्थे" इत्यादि ब्रह्मकारणवाक्यानि, कथमचेतनं प्रधानं प्रशंसन्ति। तस्मात् साङ्ख्य मूढबुद्धिं परित्यज्य शुद्धाद्वैतविद्यामाश्रित्य सुखी भवेत्युपदिष्टः परमगुरुं नत्वेदमुवाच, स्वामिन् महानुभाव महत्तत्त्वादिकारणमव्यक्तं वेदचोदितमेव प्रधानम्, तत्कथमशब्दं भवितुमर्हति, यतः कण्ठतः,

"अचिन्त्यमव्यक्तमरूपमव्ययं
तथा रसं नित्यमगन्धवच्च यत्।
अनाद्यनन्तं महतः परं ध्रुवं
निचाय्य तं मृत्युमुखात् प्रमुच्यते"॥ इति।

श्रुतौ अव्यक्तसञ्ज्ञं प्रधानं प्रतिपादितमेवेति पुनः साङ्ख्यमते प्राप्ते परमगुरुभिरेवमुच्यते। भोः साङ्ख्य भवदुक्तमनर्हम्, कथम्,

अव्यक्तं प्रधानं श्रुतिसिद्धं न भवति। अव्यक्तस्य महत्तत्त्वबीजरूपत्वे सगुणाङ्कुररूपादव्यक्तं सकलवदभवत्, तस्यैव प्रधानत्वं त्रिगुणसाम्यमिति प्रधानं यद्युच्येत तदयुक्तम्, गुणत्रयसा[illegible]धानोपासनेन सत्त्वोद्रेकज्ञानं कथं सिध्यति। ज्ञानं सात्त्विक[illegible]त्युक्ते गुणसाम्यावस्थायामेकगुणवृद्ध्यसम्भवात् मोक्षस्यानर्पणयोग्यमपि कथम् जगत्कारणमिति यद्युच्येत तदपि न समञ्जसम्, अतन्निवृत्तिदर्शनात्। तस्मात् साङ्ख्य मूढकल्पितप्रधानकारणं परित्यज्य शुद्धाद्वैतविद्याश्रयस्त्वं सुखी भवेत्युक्तः साङ्ख्यः परमगुरुं नत्वा तदुपदेशेन तच्छिष्योऽभवत्॥

इत्यानन्दगिरिकृतौ साङ्ख्यमतनिवर्हणं नाम चत्वारिंशत्प्रकरणं॥ ४०॥

## एकचत्वारिंशत्प्रकरणम्।

---

एवं परिहृते साङ्ख्यमते पुनरन्यः कापिलोयोगवित् प्रत्यवतिष्ठते। स तु किल आचार्यस्वामिनं नत्वेदमुवाच, स्वामिन् मदीयमतमतिविचित्रतरम्, योगेन मुक्तिरिति निगमागमवचनदर्शनात्। तथाहि,

"चिरुन्नतं स्थाप्य समं शरीरमित्यादि।
विविक्तदेशे च सुखासनस्थः
शुचिः समग्रीवशिरःशरीरः।
अत्याश्रमस्थः सकलेन्द्रियाणि
निरुध्य भक्त्या स्वगुरुं प्रणम्य॥
हृत्पुण्डरीकं विरजं विशुद्धं
विचिन्त्य मध्ये विशदं विशोकम्।
अचिन्त्यमव्यक्तमनन्तरूपिणं*
शिवं प्रशान्तममृतं ब्रह्मयोनिम्॥
तदादिमध्यान्तविहीनमेकं
विभुं चिदानन्दमरूपमद्भुतम्।

---

* रूपमिति पाठः साधुः।

उमासहायं परमेश्वरं प्रभुं
त्रिलोचनं नीलकण्ठं प्रशान्तम् ॥
ध्यात्वा पुनर्गच्छति भूतयोनिं
समस्तसाक्षं तमसः परस्तात्" । इति ।

आगमेऽप्यजपाविद्याया मूलाधारचक्रमारभ्य सहस्रारपर्यन्तं षट्-चक्रस्थदेवतानां गणपत्यादीनां सम्यगुपासनेन ब्रह्मनाडीविले ज्ञाते ततः कुण्डलिनीं मूलाधारचक्रस्थां वामपादपार्ष्णिनिपीडितपायुबलात् प्राणापानवाय्वैक्यं गुरूपदेशात् कृत्वा तद्देशात् समुत्थाप्य प्रतिचक्रभेदेन सहस्रारं प्रापयित्वा तन्मूलाधारे पुनः स्थापयित्वा ब्रह्मानन्दसुखभुक् पुरुषः मुक्तो भविष्यति इति । अतो यूयं मोक्षकाङ्क्षिणो योगमाश्रयध्वम् इति ॥ तत्राचार्यः पठति, भोः कापिल भवन्मतं सुतरामनर्हम्, कुतः, प्रमाणाभावात् । प्रमाणं, विविक्तदेश इत्यादिलिखितमेवेति यद्युच्येत, तथा न वक्तव्यं, व्यक्तं तदादिवाक्यैरिह दहरविद्यैव प्रतिपादिता, न योगः । अजपाविद्यायामागमोक्तबलाद्योग इति यद्युच्येत, तदपि न सम्भवति । अजपामूलमन्त्रस्य हंसरूपत्वेन सोऽहमित्यर्थे निर्द्धारिते परजीवयोर्भिदागन्धलेशाभावात्, कथं योग इति वक्तुं शक्यते । मन्त्रवशाद्योगस्याप्राप्तावपि कुण्डलिन्या षट्चक्रभेदनमात्रं योग इति यद्युच्येत, तदपि न मानम्, मुक्तिमार्गाभावात् ।

"सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि।
सम्पश्यन् ब्रह्म परमं याति नान्येन हेतुना॥

इति निषेधस्यान्यपरत्वात्। किञ्च, ज्ञानाधिकारपरामर्शेऽपि "शान्तो दान्त उपरतस्तितिक्षुः समाहितः श्रद्धान्वितो भूत्वा आत्मन्येवात्मानमनुपश्येदिति" नियमः प्रतिपादितः। अनुशब्देन ब्रह्मविषयैकवेदान्तशास्त्राङ्गीकारमात्रञ्चोच्यते, "वेदान्तविज्ञान-सुनिश्चितार्थाः सन्यासयोगाद्यतयः शुद्धसत्त्वाः। ते ब्रह्मलोके तु परान्तकाले परामृतात्*परिमुच्यन्ति सर्वे" इति श्रुतेः। अतो योगस्य सर्वदा निरवकाशत्वात् अप्रामाण्ये प्राप्ते पुनः कापिलः सकललोकगुरुं स्वामिनमिदमुवाच, भोः परमयतिवर्य, योगो न मुक्तिकारणमिति भवदुक्तं, सत्यं मुक्तिस्वरूपानभिज्ञत्वमेवं जल्पसि।

"अज्ञात्वा खेचरीमुद्रां ब्रह्मज्ञोऽहमिति द्विजः।
यो वदेत्तस्य जिह्वायाश्छेदं कुर्विति शासनम्॥
नदीत्रितयसंयोगं त्रिकूटाख्यमिति द्विजः।
ब्रह्माहमिति यो ब्रूते तज्जिह्वाच्छेदमाचरेत्॥
अविदित्वा द्विजो यस्तु शृङ्गाटकमतोपरि।
ब्रह्माहमिति यो ब्रूते तज्जिह्वाच्छेदमाचरेत्॥
मनोन्मन्या स्वरूपं हि पूर्णमण्डलमार्गतः।
अविदित्वा ब्रवीद्ब्रह्मेत्यस्य जिह्वां हि सञ्छिनेत्॥

* मृताः इति क्वचित् पाठः।

अङ्गुष्ठमात्रस्य पुंसः स्थानज्ञानं विना द्विजः।
ब्रह्मास्मीत्युच्यते यो वै तस्य जिह्वां हि सञ्छिनेत्॥
अवस्थात्रितयस्थानं नीचोन्मत्तविगर्हितम्।
अज्ञात्वा ब्रह्म यो ब्रूते शिरस्तस्य पतत्यधः"॥

इत्याद्यनेकगोप्यलक्ष्यलक्षणस्थानव्याप्तं ब्रह्मस्वरूपं योगशास्त्रं विना ज्ञातुमशक्यम्, लययोगे तत्प्रपञ्चस्यातीवदर्शनात्, "लयवित् परमं ब्रह्म याति नान्येन वर्त्मना" इति योगपरस्य निषेधदर्शनात्, लय-भिन्नज्ञानस्य योगोऽवश्यमङ्गीकर्त्तव्यः। "हठवित् परमं स्थानं याति ब्रह्म सनातनम्" इति हठयोगप्रपञ्चस्य श्रेष्ठत्वमुक्तम्। अतः सर्वदा अत्यन्तयत्नेन मोक्षकाङ्क्षिभिर्योग एवाङ्गीकर्त्तव्यः। एवं प्राप्ते भगवद्भिरिदमुच्यते, किं कापिल त्वं वृथा जल्पसि, प्राणा-यामप्रत्याहाराद्यष्टाङ्गयोगैर्न मुक्तिमार्गगन्धः सम्भवति। किन्तु देहशुद्धिमात्रमेव फलम्। खेचरीमुद्राविज्ञानेन मोक्षो नास्तीति भवदुक्तम्, तदत्यन्तमन्दतरम्, परिपूर्णस्य ब्रह्मणः सम्यग्ज्ञानं किलाभ्यसनीयम्, तादृग्विधज्ञानस्य चित्तशुद्धिमूलकत्वात्, तस्य सत्कर्माश्रयत्वादतो वेदोक्तसत्कर्मैव सदनुष्ठितं तच्चित्तशुद्ध्यादि-फलं जनयति। तेन नित्यानित्यवस्तुविवेके इहामुत्रार्थफलभोग-विरागे शमदमादिषट्कसम्पत्तौ शीतोष्णादिद्वन्द्वसहने मुमुक्षुत्वे जाते सति मुक्तिः सिद्धैव साधनसम्पन्नस्य श्रवणादिना, इति। श्रवणं नाम श्रीमद्गुरुमुखात् महावाक्योपदेशः "तत्त्वमसि" "अहं ब्रह्मास्मि" "अयमात्मा ब्रह्म" "नेह नानास्ति किञ्चन"। एवं

वाक्यचतुष्टयस्योपदेशादेव शिष्यस्य श्रवणसिद्धौ जातायां तद्वाक्यार्थविचारणरूपं मननमिति वाक्यार्थनिष्पन्नस्वरूपध्यानमेव निदिध्यासनमित्युच्यते, तदा सर्वात्मकब्रह्मसाक्षात्कार एव मोक्ष इति निरवद्यम्। किञ्च रहस्यवेदे महादेवेन किल गुरोरुपदेशः कृत इत्युक्तम्, तदुपदेशप्रकारोऽपि महावाक्यचतुष्टयरूप एव, तथाविधोपदेशेन गुरुकस्य सर्वात्मकब्रह्मसाक्षात्कारसिद्धिः।

कठप्रश्ने "आश्चर्यो वक्ता कुशलोऽस्य लब्धा

आश्चर्यो ज्ञाता कुशलानुशिष्टः।

न नरेणावरेण प्रोक्त-

एष सुविज्ञेयो बहुधा चिन्त्यमानः॥

अनन्यप्रोक्ते गतिरत्र नास्ति

अणीयो ह्यतर्क्यमनुप्रमाणात्"

इति गुरुशिष्याभ्यां प्रयत्नात् ज्ञातव्यस्य सर्वात्मकस्य ब्रह्मणः स्वरूपं केन वेत्तुं शक्यमिति उक्ते तत्रैवोक्तम्,

"मनसैवेदमाप्तव्यं नेह नानास्ति किञ्चन"।

इति। एवकारेण मनोव्यतिरिक्तसाधनान्तराभाव इत्युच्यते। अतः शुद्धमनोवेद्यं ब्रह्मेति प्राप्ते,

"यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह"

इति श्रुतिर्विरुध्यते तथाप्येतद्दूषणमपक्वमनसा ज्ञातव्यम्। तावत्पक्वमनसः कारणशरीरस्य मनोन्मन्यवस्था यदा प्राप्यते तदा सदसदात्मके अङ्गुष्ठमात्रे पुरुषे लीनं मनो भवति तस्यैव

ज्ञानरूपत्वात्, जलमालिन्यकतकरेणुवदित्यूहनीयम्। सूच्छाक-ल्पितपरिच्छिन्नरूपमात्रपरमात्मनि मनोलये जाते मनःकल्पित-सर्वप्रपञ्चोपशमान्मुक्तिरिति दिक्। चतुर्विंशतितत्त्वात्मकस्थूल-शरीरस्य सूक्ष्मे सदशेन्द्रियात्मके लयं कृत्वा तदपि कारणे मनोमात्रे लयप्रलयं कुर्वतः सिद्धमनसोऽपि परब्रह्मणि लयं चिकीर्षोः पुरुषस्य जीवन्मुक्तस्य दग्धपटन्यायेन प्रपञ्चान्तःपा-तिनः किमु साङ्ख्ययोगाभ्यां प्रयोजनं विद्यते। ब्रह्मस्वरूपानभि-ज्ञस्य सद्गुरूपदेशलेशादपि दूरगतस्य मर्त्यस्य मूलाधारा[illegible]ः शल्यमांसमयैः किं मुक्तिरस्ति। तस्मान्मूढबुद्धिं परित्यज्य न-रस्तयोगतत्त्वः शुद्धाद्वैतविद्यामाश्रित्य सर्वपरिपूर्णं ब्रह्म [illegible]-दानन्दलक्षणं ज्ञात्वा मुक्तो भवेत्युक्तः कापिलः परमगुरु[illegible]-णारविन्दद्वन्द्वानम्रशिरास्तदुपदेशेन शुद्धाद्वैतविद्यामाश्रितः शि-ष्यश्रेष्ठोऽभवत्॥

इत्यानन्दगिरिकृतौ योगमतनिवर्हणं नामैकचत्वारिंशत्प्रक-रणम्॥ ४१॥

## द्विचत्वारिंशत्प्रकरणम्।

---

ततः पीलूनां वादिनो धीरशिवभट्टशिवगङ्गानाथादयः परमगुरुं नत्वेदमूचुः, स्वामिन् अस्मदीयमतं शृणु, सांख्यमतनिराकरणमिव न सुलभम्। न्यायशास्त्रे कर्त्ता ईश्वरः प्रसिद्धः। परमेश्वरः साक्षात् जगत्कर्त्ता, स एव स्रष्टा भूम्याद्यणुसंयोगं लये वियोगञ्च करोति, भूम्याद्यणूनां नित्यत्वात्। एवं भूम्यबग्निवायुप्रपञ्चे जाते तैरेवातलवितललोकसृष्टिं विधाय तत्तल्लोकवासयोग्यान् प्राणिनः सृष्ट्वा स्वयं सर्वसाक्षी सर्वं सम्पश्यन्नास्ते सर्वपरिपूर्णश्च आकाशवदिति प्राप्ते परमगुरुः पठति, भो धीरशिवादयः शृणुध्वं, भवन्मतमसमञ्जसम्, कुतः, श्रुतिविरोधात्। आत्मन आकाशः सम्भूत इत्यादिना भूतानां जन्यत्वानित्यत्वे प्राप्ते कथं नित्यतास्ति "यज्जन्यं तदनित्यम्" इति न्यायात्, "अत्ता चराचरग्रहणात्" इति सूत्राच्च सर्वात्तृत्वे जगदीश्वरस्य प्रोच्यमाने केऽवशिष्टाः पीलवो विद्यन्ते। अतः पृथिव्यादिषु नहि नित्यत्वकल्पना युक्ता, पर-

मेश्वर एक एव नित्यस्तद्व्यतिरिक्तं जगदनित्यमिति सिद्धान्तः। तन्मतदूषणञ्च प्रतिपादितं,

"अधीत्य गौतमीं विद्यां गार्द्दभीं* योनिमाविशेत्"।

इति प्रत्यक्षादिप्रमाणसिद्धभूतास्तित्वकल्पनां परित्यज्य नित्य-शुद्धबुद्धमुक्तस्वरूपं "सत्यं ज्ञानमनन्तं ब्रह्म" इति गुरूपदे-शाज्ज्ञात्वा शुद्धाद्वैतविद्यामाश्रित्य मुक्ता भवथेत्युक्ताः पीलुवा-दिनस्तदुपदेशवशात्तच्छिष्या बभूवुः॥

इत्यानन्दगिरिकृतौ पीलुमतनिबर्हणं नाम द्विचत्वारिंशत्-प्रकरणम्॥ ४२॥

---

* शार्गालीमिति वा पाठः।

## चत्वारिंशत्प्रकरणम्।

---

प्रातः स्नात्वा त्रिवेण्यां हि गुरुः शिष्यसमन्वितः।

प्राङ्मार्गात्प्राप पश्चाद्द्रुत्काशीं काशीशसंयुताम्॥

तदानीं वाद्यादिकृतस्तुतिभिः शिष्यकृतकरतलतालैः शङ्खढक्कादिनिनादैश्चित्रमासीत्, तत्र स्थिते त्रिमासकालं परमगुरौ केचित् कर्मवादिनः समागत्य स्वामिनमिदमूचुः, शृणु मतं मदीयम्, अखिलकारणं कर्मैव, जगदुत्पत्तिविपत्तिसम्पत्तयः कर्मणैव भवन्ति, तथाविधप्रमाणस्य विद्यमानत्वात्। "तद्धेतर्ह्यव्याकृतमासीत्" इति श्रुतेः, "इदं जगदव्यक्तमासीत्" केन कर्मणैव तस्य स्वतन्त्रत्वात् कर्मैव कारणम् "अथातो धर्मजिज्ञासा" इति सूत्रे जैमिनिना सिद्धान्तितत्त्वाच्च। तदेव स्वनिष्ठान् सृजति लये संहरति तन्मध्ये पालयति; सत्यमेव तेषां सुकृतकर्मवतां जीवानां सुकृतयोनिप्राप्तिः। पापकर्मवतां पापयोनिप्राप्तिरपि दर्शिता। "अथ यदि ते रमणीयचरणा रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वेति। अथ यदि ते कपूयचरणाः कपूयां योनिमापद्येरन्, श्वयोनिं वा शूकरयोनिं वा चण्डालयोनिं वेति" चलि-

तावरणमावरणं कर्म्मैव पुण्यपापयोनिषु जननकारणमिति कृत्वा सत्कर्म्मैव सर्वैर्मुमुक्षुभिः कार्य्यमिति जीवस्य सुखप्राप्तिरेव मोक्षः, कर्म्मैव संसिद्धिनिमित्तकारणम्। अतः "कर्मणैव हि संसिद्धिमास्थिता जनकादयः" इत्युक्तेर्गीतादौ लोकदृष्टान्तोऽपि कृष्यादिकर्म्मणा फलप्राप्तिदर्शनात्। तस्माद्भवद्भिरङ्गीकर्त्तव्यं कर्म्मैव मुमुक्षुभिरिति प्राप्ते परमगुरुः पठति, भवन्मतमनर्थम्, कुतः, निगमादिवाक्यप्रपञ्चादिविरोधात्। तथाहि, "यस्यैवेतत्कर्म्म स वै वेदितव्यः" इति श्रुतद्भगवत्कर्म्मैव तस्य जगदुत्पत्त्यादिकारणत्वात्। अथर्वशिखायां कारणन्तु ध्येय इत्युपक्रम्य "शम्भुराकाशमध्यगः" इत्युपसंहृतम्। अतः सर्वकारणं ब्रह्मास्तीति सिद्धमेव। श्रुत्यन्तरञ्च, "ऋतञ्च सत्यञ्चाभीद्धात्तपसोऽध्यजायत ततो रात्रिरजायत ततः समुद्रोऽर्णवः समुद्रादर्णवादधिसंवत्सरोऽजायत अहोरात्राणि विदधद्विश्वस्य मिषतो वशी सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत् दिवञ्च पृथिवीञ्चान्तरीक्षमथो भुवः स्वरिति" ॥ अर्थस्तु वक्तव्यः, 'अभीद्धात्तपसः' मायाशवलाद्ब्रह्मणः, 'ऋतं' सूक्ष्मं, महत्तत्त्वादि 'सत्यं' च स्थूलं विराडादिप्रपञ्चरूपं, 'अध्यजायत,' तदा सूर्य्यादिग्रहाभावात् रात्रिरेव प्रथममजायत, ततः 'समुद्रः' लवणादिसप्तरूपः, 'अर्णवः' गङ्गादितटिनीशः, 'समुद्रात्' उक्तात्, 'अर्णवात्', च अधिकृत्य 'संवत्सरः' कालः, 'अजायत', सम्यगस्मिन्नयनमासपक्षदिनाऽहोरात्रयामघटिकाविघटिकामुखसूक्ष्मकालाः युग-

मन्वन्तरकल्पादिस्थूलकालाश्च वसन्तीति संवत्सरः, स एव प्रथमं 'अजायत' इत्यविरोधः। ततः सूर्यादिग्रहोत्पत्त्यनन्तरं 'अहो-रात्राणि विदधत्,' बहुवचनेन प्रतिविषयभिन्नभिन्नाहो-रात्राणीति निरवद्यम्। 'मिषतो विश्वस्य', 'वशी' ब्रह्मा, 'सूर्याचन्द्रमसौ', 'यथापूर्वं' पूर्वकल्पानुरोधेन, 'अकल्पयत्,' सूर्येण विना अहोरात्र्युत्पत्त्यभावात् सूर्याद्युत्पत्त्यनन्तरमेवा-होरात्र्युत्पत्तिर्वक्तव्या। अत्रार्थक्रम एवाङ्गीकर्त्तव्यः, पाठक्र-मविरोधात्। "अग्निहोत्रं जुहोति" "यवागूं पचति" इत्यत्र अग्निहोत्रहोमानन्तरं यवागूपाको व्यर्थः स्यात्, तस्मादर्थक्रमो यथाङ्गीकर्त्तव्यः, तथैवात्राङ्गीकर्त्तव्य इत्यलमतिप्रसङ्गेन। 'दिवं' द्युलोकं, 'पृथिवीं' भूमिष्ठातलादिसप्तलोकान्, 'अन्तरिक्षं' सूर्यादिग्रहलोकं ध्रुवलोकपर्यन्तं, 'स्वः' स्वर्लोकोपलक्षितमह-र्जनतपःसत्यलोकांश्च, एवं 'अकल्पयत्'। तस्मादीश्वरः सर्वकारणं कर्मणो जडस्य नहि जगज्जन्मादिकारणत्वं मन्दा अप्यङ्गीकुर्वन्ति, यत्परं कुड्यारचनादिकं कर्म तदेव फलदमिति वक्तुं नहि रमणीयम्। इदं कुड्यादिरचनादिकं कर्म कुरु इत्या-ज्ञप्तः फलदः स्यात्, तस्य चेतनत्वात्, अतो ब्रह्मैव जगदुपादा-नकारणमिति सम्यगुक्ताः कर्मवादिनः कनकगिरितुरङ्गनाथादयः परमगुरूपदेशेन शुद्धाद्वैतविद्याश्रिताः कृतार्था बभूवुः॥

इत्यानन्दगिरिकृतौ कर्ममतनिवर्हणं नाम त्रिचत्वारिंशत्प्रक-रणम्॥ ४३ ॥

---

## चतुश्चत्वारिंशत्प्रकरणम् ।

---

तदनन्तरं शिवाभरणाख्यः स्वशिष्यैः सह समागत्य स्वामिनमिदमुवाच, मदीयमतममृतमिव सर्वलोकोपादेयं चन्द्रदैवतं, सावधानेन शृणु। भगवान् चन्द्रः किल षोडशकलापरिपूर्णः सर्वदा सर्वप्राणिपोषणपरः स्वाष्टादशसहस्रराजनविस्तीर्णमण्डलेन ब्रह्माण्डं द्योतयन् विभुरेकोऽद्वितीयः परोऽमृतरूपः स एव वर्त्तते,

"पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः"।

इति श्रुतेः सर्वदेवत्वप्रसिद्धश्च। तथा हि स्वगात्रनिष्ठामृतं देवेभ्यो दत्वा तान् परिपालयति। तथा "प्रथमां पितरः पिबन्ति" इति श्रुतेः। अतः पूर्णिमादिपुण्यकालेषु चन्द्रोपासनया प्राप्तामृतपानेन मुक्तिरिति प्राप्ते परमगुरुः पठति, भोः शिवाभरण भवन्मतमनर्हं, प्रमाणाभावात्। चन्द्रोपासनया मुक्तिरित्युक्तं तदपि न मानम्। अनित्योपासनया मुक्तिप्राप्तिरस्तीति नह्यनुचितमेव तव रोचते। नहि मोक्षमार्गोऽप्येतद्द्वारा विद्यते। किन्तु इष्टापूर्त्तादिकर्मकृतां चन्द्रप्राप्तिः पुनर्मर्त्यलोकप्राप्तिरित्यनुज्ञामात्रेण मुक्तिः किं वर्त्तते। धूमोरात्रिस्तथाकृष्णः षण्मासा दक्षिणायनं।

तच चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्त्तते" ॥

इति भगवदुक्तेः, "एष देवानामन्नम्" इति श्रुतेश्च, अन्नरूपस्य चन्द्रस्य ध्यानेन न हि मोक्षलेशः सम्भवति, तल्लोकप्राप्तिरिति वयमपि शृणुमः"। मूढतम शुद्धाद्वैतविद्यामाश्रित्य त्वं कृतार्थो भवेत्युक्तः शिवाभरणः सद्गुरूपदेशं लब्ध्वा शुद्धाद्वैतविद्याश्रितो-ऽभवत् ॥

•

इत्यानन्दगिरिकृतौ चन्द्रमतनिवर्हणं नाम चतुश्चत्वारिंश-त्प्रकरणं ॥ ४४ ॥

पञ्चचत्वारिंशत्प्रकरणम्।

---

एवमेतस्मिन् परिहृते पुनरन्ये भौमादिग्रहोपासकाः प्रत्यवतिष्ठन्ते, ते किल अरुणः* सुविद्यः कृतविद्यः धर्म्मिष्ठः कल्माषः क्षतवदन* इत्याद्याख्याः स्वामिनं नत्वेदमूचुः, शृणु, अस्मदीयमतानि परमसुलभानि तावत्, भौमस्याग्निमूर्द्धत्वं दिगिलापतित्वं श्रुतिसिद्धं। आगमेषु चाङ्गारकप्रसिद्धिर्वर्त्तते। ऋणविमोचनाङ्गारकादिस्तवेषु॥

"कुमारो रक्तवर्णश्च वह्निमूर्द्धा द्युदिक्पतिः।
भूयःकीर्त्तिर्महीतत्त्वगात्रो भौमः स पातु माम्॥
भोगमोक्षौ ददात्वस्मत्कार्य्यं सफलमादरात्"॥

श्रुतिश्च। "अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम् अपां रेतांसि जिन्वथ" इति। तस्मादिहामुत्र फलेच्छुभिर्भौमोपासनं कर्त्तव्यमिति प्राप्तं; तद्वत् बुधोपासनमपि सर्वविद्याप्रदत्वात् ज्ञानहेतुकत्वाच्च, ज्ञानं मोक्षदमतो मोक्षकारणस्य बुधस्योपासनस्य श्रुत्यादिमूलकत्वात् तदेवाङ्गीकर्त्तव्यम्। गुरूपासनं कर्त्तव्यम् तस्य

---

* क्रूरवदन इति क्वचित्पाठः।

वेदमूलकत्वात् देवगुरुत्वाच्च। अतो गुरोः सर्वज्ञत्वादिगुणविशिष्ट-त्वाच्च गुरूपासनमावश्यकं कर्त्तव्यम्। भृगोरुपासनमपि तद्वदेव, तस्य महर्षित्वात्। अनादिगुरुत्वं सर्वज्ञत्वं सर्वद्विजपूज्यत्वं सिद्धं, तत्प्रसिद्धिर्यजुःकाण्डेऽभिहिता। "भृगूणां त्वाङ्गिरसां व्रतपते व्रतेन दधामीति भृग्वङ्गिरसामादध्यात्" इति। तस्य वरुणपुत्रत्वेन तदुपदेशबलात् सर्वज्ञस्य भृगोरुपासनया ज्ञानसिद्धिः, तस्माद्भृगू-पासनमावश्यकम् इति तावत् प्राप्तम्। मन्दस्य सुखकारणत्वेन तदुपासनया दुःखनिवृत्तौ जातायां सुखप्राप्तिरेव मोक्षावाप्तिः, इति तदुपासनस्यापि मोक्षकारणत्वेन ग्राह्यत्वं प्राप्तम्। रा-हूपासनं कर्त्तव्यम्, विष्णुवचनाद्रविचन्द्रग्रहणसमर्थस्य बलिनः परमोपासनया ग्रहातिग्रहमार्गादिवृत्तलभ्यमानत्वात्, तदुपासन-मावश्यकम् इति प्राप्ते, तेषां भौमादीनां स्वतन्त्रत्वात् पृथ-गुपासनैर्धर्मार्थकाममोक्षपुरुषार्थसिद्धिर्भविष्यति। अतो निः-सन्देहाद्भवन्तोपि मुक्तिकाङ्क्षिणः पञ्चकारणानां ग्रहाणामु-पासनं कुर्वन्तु, तेन कालातीतवृत्त्याश्रिता मुक्ता भवथ इति प्राप्ते आचार्यः पठति, यूयमनृणादयः शृणुध्वं, भवन्मतानि नाङ्गीकर्त्तव्यानि, कुतः, प्रमाणाभावात्। वेदमूलमेव प्रमा-णमिति यद्युच्येत, तर्हि सर्वस्यापि वेदमूलकत्वमस्त्येव। नहि सर्वस्योपासनं युक्तम्, यच्चैतन्यं जगदुपादानकारणम् "सदेव सोम्येदमग्र आसीत्" इत्यादि जगत्कारणवाक्प्रपञ्चवेद्यं तदे-कमेवाद्वितीयं ब्रह्म सर्वैर्मुमुक्षुभिरुपासनीयम्। तदुपासकानां

तत्प्राप्तिरेव मोक्षः। विना विज्ञानं शरीरिणां ग्रहाणा-मुपासनेन मुक्तिरिति जडा अपि न मन्यन्ते। लोकानां विरुद्धग्रहपीडाशान्तये तत्तद्ग्रहोपासनं कर्त्तव्यमिति वेदमूलकत्वेनावश्यकं वाक्योपयोगिकञ्च, एवं दृत्तिमतां ज्ञानदातृत्वमनुचितमेव, तस्मात् जड़ाशां परित्यज्य शुद्धाद्वैततत्त्वा-भवथ। गुरुणा परमे ब्रह्मण्युपादिष्टे शिष्यः पुत्रोभवेत्, शिष्योपादिष्टे तु शिष्योगुरुरेवासीत्, गुरुः शिष्योभवेत्, तदा

"मनोन्मने मनस्येव लीने ब्रह्म परङ्गतः।
स एव सं माचोस्यादिति वेदा वदन्ति हि"।
श्रुत्वैतदनृणाद्यास्तु नत्वा गुरुपदद्वयम्॥
शिष्या बभूवुस्तद्बोधे जीवन्मुक्तास्तदाऽभवन्॥

इत्यानन्दगिरिकृतौ भौमादिग्रहपञ्चकस्यार्थाद्ग्राहमतस्य निबर्हणं नाम पञ्चचत्वारिंशत्प्रकरणम्॥ ४५॥

---

षट्चत्वारिंशत्प्रकरणम्।

---

ततः क्षपणकः परमगुरुं नत्वा इदमाह, स्वामिन् भवदाश्रयणेन मया षण्मासकालोऽनुभूतः, इतः परं मन्मतपरीक्षां कुरुध्वं, अहं यास्यामीत्युक्तः शङ्करगुरुरपि तन्मतसुपरिशीलनार्थमिदमब्रवीत्। भवत्करधृतयन्त्रस्य लक्षणमुक्त्वा शीघ्रं गच्छ इति। स तु क्षपणकः पुनः परमगुरुं नत्वा सावधानेनेदं श्रूयताम् इति विज्ञाप्याह, इदं किल गोलयन्त्रं तदन्तर्वर्त्तिनो भूपिण्डस्य नित्यमधःपतनशीलस्यानुकूलवृत्त्या सर्वग्रहर्क्षमण्डलोपेतं समान्तरमनुगच्छति, तन्मध्यस्थग्रहास्तु चक्रवेगात् प्रागुदयं प्रत्यगस्तमयं यान्ति। केचिन्मन्दधियः कश्चिच्छिशुमारनामा भगवान् सकलादिप्रदेशेषु ग्रहर्क्षगणं बिभर्त्तीति वदन्ति। तदत्यन्तमसत्यम्, एकस्यस्य शरीरिणो विकृतशिशुमारस्य करादिस्था ग्रहास्तु तेषां भूम्यधो भ्रमणहेतुत्वाभावात्। तस्मात् कालचक्राश्रिता ग्रहाः सर्वे तस्योपरि कक्षाबद्धास्त्विन्द्रादयः अन्यन्ताः कालरूपानुवृत्तिमाश्रिताः कालेन नित्यभ्रमणशीला इति पूर्वापरयाम्योत्तरवृत्तद्वयसंयोगस्थानदत्तफलांशमखण्डद्वयाग्रनिबद्धं क्रान्तिवृत्तं स्यात्, तस्मिन् किल द्वादशराशिषु

स्थावरजङ्गमसञ्चारं कुर्वन् अहरहः सूर्यो वर्त्तते, सर्वखेचरम- ण्डलाश्रितं ग्रहगोलं स्वपार्श्वस्थखगोलान्तर्वर्त्तमानमध्यचिह्न- मार्गविम्बमूर्ध्वे ग्रहदर्शनकालस्वरूपज्ञानतो मुक्तिरिति काल एव ब्रह्म, अतः कालविद्ब्रह्मविदिति निरवद्यम्। दिक्कालौ ने- श्वरादतिरिच्येते, मानाभावात्। न च परत्वापरत्वासाधकत्वेन तत्सिद्धिः, आत्मनस्तदुन्नयनादित्यादितर्कराद्धान्तवशादपि का- लस्य ब्रह्मत्वे प्राप्ते तत्तुर्यांशो लघुमार्गात्तुर्ययन्त्रं मण्डलचतुर्भा- गमित्यर्थः। तत्र यन्त्रोपरि किल रन्ध्रद्वयमखिलं कृत्वा तन्म- ध्यदृष्ट्या रविज्ञानेन कालज्ञानं जायते। अत्र तुर्ययन्त्रे त्रिंश- ज्जीवकल्पना कर्त्तव्या, ताभ्यो नवत्यंशकल्पना, तदधः पञ्चदश- घटिकादिकल्पना। एवमेतद्वित् सर्ववित् भवतीति सम्यगुपपादि- तमिति पूर्वपक्षे प्राप्ते परमगुरुः पठति, भोः क्षपणक कालस्य ब्रह्मत्वं तावत् प्रतिपादितं किल, तदत्यन्तमग्राह्यम्, कथं, तस्य जन्यत्वदर्शनात् सावयवत्वात्। तथाहि यजुरारण्यके

"नदीव प्रभवेत् काचित् अक्षय्यात्स्यन्दते यथा।
तान्नद्योऽपि समायान्ति ताभिः सा न निवर्त्तते॥
एवं नाना समुत्थानाः कालाः संवत्सराश्रिताः।
अणुशश्च महशश्च" इति॥

अक्षय्यादविनाशस्थानात् कदाचित् नदी प्रभवति तां तदन्या अल्पनद्योऽधिकनद्यश्च समायान्ति। सा ताभिरनुरूपाधिक- रूपा सती न निवर्त्तते। एवमेव नानासमुत्थाः काला

अणुश्रो मद्दश्च संवत्सरादणवोऽयनादयो मद्दश्च युगादयोऽपि सर्वेऽपि संवत्सरं कालमाश्रिताः। स तु संवत्सरः कालः केनापि न निवार्य इव वर्त्तते। श्रुत्यन्तरे "संवत्सरोऽजायतेति"। एवं अन्यस्य कथं ब्रह्मत्वं वक्तुं शक्यते। वैशेषिकास्तु कालमुपेक्ष्यान्योऽन्येन पञ्चविंशतितत्त्वानि विविच्येदमब्रुवन्, नानाविधशक्तिमयी सा जनयति कालतत्त्वम्, एवमेवाविर्भवभूतचयं कलयति जगदेव कालोऽत इति। अतः कालतत्त्वस्य जन्यत्वाद्ब्रह्मत्वमयुक्तम्, इति सिद्धान्तः। गोलान्तःस्था पृथिवी नित्यमधः पततीत्युक्तं, तदपि न मानम्, भूमेरधःपतनहेतुप्रमाणाभावात्। "मध्ये समतदण्डस्य भूगोलो व्योम्नि तिष्ठतीति सूर्यसिद्धान्तवचनाच्च"। किञ्च भूनिष्ठपुरुषेण गगणं प्रत्युत्क्षिप्तं पाषाणादिकम् भूम्युपर्य्येव क्षिप्रं निपतति, तद्दृष्ट्वापि किमुच्चरितं भवता मन्दधिया। तस्मात् भूम्यधःपतनं निरालम्बमेवासीत्। अतः स्थिरस्य भूमिपिण्डस्यान्तर्गतयास्योत्तरं किल सुमेरुशृङ्गत्रयं वर्त्तते। तत्र दक्षिणपश्चिमदिक्स्थशृङ्गे रुद्रपत्तनं, मध्ये खलु ब्रह्मपुरं, प्राक्शिखरे विष्णुपुरञ्च वर्त्तते। तदधस्ताच्चाष्टदिक्पालपत्तनानि क्रमात्सन्ति। मेरोः परितोविष्कम्भशैलाः, तच्छिखरेषु कदम्बजम्बुवटपिप्पलाख्यास्तरवश्च वर्त्तन्ते। जम्बुवृक्षपक्वफलानां रसेन नदी, जाम्बूनदीति प्रसिद्धा, तद्वशादेवेदं जम्बुद्वीपमिति प्रसिद्धम्। भूम्यर्द्धमुदक्स्थं नवखण्डवर्षाख्यम्, अर्द्धमन्यत् सप्तसमुद्रैः षड्द्वीपैरन्वितमिति

ज्योतिःशास्त्रप्रसिद्धम् । भूमध्ये तु लङ्कापट्टणं, तत्प्राक् तुर्यांशान्तरेण यवकोटिपट्टणं, तत्प्रत्यक्समान्तरे रोमकम् तदधस्तदूर्द्धसमान्तरे सिद्धपुरम्, एवं पट्टणचतुष्टयस्य उदयमध्याह्नास्तमयार्द्धरात्रकालान् पञ्चदशघटिकान्तरेण पूरयति भानुः । एवं सति यदा लङ्कायामुदयः, तदा सिद्धपुरस्यास्तमयः, यवकोट्यां मध्याह्नः, रोमकस्य अर्द्धरात्रम् । उक्तञ्च सिद्धान्ते, "उदयो योऽयं लङ्कायां सोऽस्तमयः सवितुः" इति । सिद्धपुरे मध्याह्नः यवकोट्यां रोमकविषये अर्द्धरात्रं चेति, तच्चतुःपट्टणे पर्य्येव कालचक्रं सप्तविंशतिनक्षत्रात्मकम्, तदन्तस्थलनीचग्रहकक्षाश्रितं प्रवाहानिलजवात् भ्रमणशीलं ब्रह्मणा किल सृष्ट्यादौ सृष्टम्, तल्लङ्कायां समन्तादन्यविषये कालचक्रादिदिङ्मण्डलसम्पर्कवशात् स्वस्तिकचतुष्टयमुत्पाद्य वाह्यवृत्तं क्रान्तिमण्डलं, सूर्यस्तत्र किल राशिमनुभवति । लङ्कात उदक् प्राक् याम्ये च त्रीणि त्रीणि अहोरात्रवृत्तानि कलयति । उदक् त्रिषु मेषादिषट्कमनुभवति । क्रमोत्क्रममार्गमाश्रित्य तदर्द्धन्मिथुनान्ते याम्यायनारम्भः सिद्ध एव । याम्ये धनुरन्ते दिङ्मार्गानुकूलवृत्ते उदगयनं प्रसिद्धमिति सम्प्रदायः । तेषां चक्रवशात् प्रत्यग्गतिरेवेत्युक्तम्, तदनर्हम्, ग्रहाणां प्राग्गतेः प्रत्यक्षदृष्टत्वात् । तथाहि अश्विनीनक्षत्रे स्वमध्यङ्गते तदपेक्षया भरणी किल प्रागेव वर्त्तते, तत्प्राक् कृत्तिकादि । तथैवाश्विन्यस्थग्रहो भरणीमेव याति । तत्रस्थः कृत्तिकामित्यादिप्राग्गतिः प्रत्यक्षदृष्टा । तस्मात्

ग्रहाणां प्राग्गतिः, चक्रस्य प्रत्यग्गतिः, इति । आदौ भगवता सृष्टे चक्रे अश्विन्यादिघटिकायां भानुवारे प्रतिपदि चैत्रमासे शुक्लपक्षे प्रभवसंवत्सरे कुपिण्डोपरि वायुद्वयोपरिवर्त्तमाने प्रवहवायौ चन्द्रबुधशुक्ररविकुजगुरुशनयो निवेशिताः, स्वस्वोपरिकक्षास्थाश्चक्रान्तर्वर्त्तिनोऽपि चक्रान्तस्था इव भान्ति, तद्वशादेव प्रागुदयः, पश्चादस्तमयश्च तेषाम् स्पष्टानुभवः कथमित्युक्ते कालचक्रस्यप्रतिपद्यन्तसूत्राणि चन्द्रकक्षानिर्गतानि* किल, प्रतिपक्षकक्षाग्रहणमाचरन्ति, तद्वशात् घटीमयसमयस्य स्वकक्षासु प्राक्तनसङ्ख्या कुलालचक्रविपरीतगतिकीट इव प्रतिदिनं नभोऽष्टतिभूमितयोजनप्रमाणमार्गञ्चरतां स्वस्वकक्षामागतानां दृक्लघुभगतिरिति सम्यगुपपद्यते । सा सर्वेषां समाप्तिभिन्नैव प्रतिफलति, भिन्नभिन्नान्यकृता प्रदक्षिणपुरुषगतिरिव, एवं चन्द्रशन्योर्योजनीयम् । उक्तञ्च सिद्धान्ते

"मन्दामरेज्यभूपुत्रसूर्यशुक्रेन्दुविन्दवः ।
परिक्रमन्त्यधोधःस्थाः सिद्धा विद्याधरा घनाः" ॥ इति ।

"कक्षाः सर्वा अपि दिविषदां चक्रलिप्ताङ्कितास्ता
वृत्ते लघ्व्यो लघुनि महति स्युर्महत्यश्च लिप्ताः ।
तस्मादेते शशिबुधसितादित्यभौमेज्यमन्दा-
मन्दाक्रान्ता इव शशधराद्यान्ति यान्तः क्रमेण" ॥ इति ।

* चक्रकक्षाङ्कितानीति वा पाठः ।

ग्रहगतिरपि षोढा पूर्वापरा उदग्याम्या ऊर्द्धाधरा चेति कश्चिद्विशेषोऽत्रावगन्तव्यः। सूर्यः किल जननसादृश्यात् सन्ध्यादिकाला जाताः, शश्वत् प्रागदिशश्चरतोः सूर्यचन्द्रयोर्दर्शान्ते सङ्गमः सम्भवति। तस्मात् शीघ्रमत्या पुरोगते चन्द्रे भानौ पृष्ठस्थे द्वादशांशमितं यदा भवति तावत् प्रतिपदुत्पद्यते। चतुर्विंशत्यंशान्तरे द्वितीयेत्याद्युत्पत्तिरित्येदमन्यासां तिथीनां ज्ञातव्यम्। चन्द्रादेव नक्षत्रं तयोर्योगाद्योगसिद्ध्यर्थं करणमेवं पञ्चाङ्गोपपत्तिः। ग्रहपतिचलनादेव लोकान्धकारनिवृत्त्यर्थं भगवति केचित् शिशुमारे ग्रहस्थानं वदन्ति, तदनर्हमिति भवदुक्तं तदेव ग्राह्यं भवति। कुतः, पुराणप्रमाणस्य विद्यमानत्वात्। सर्वैर्व्यासैः किमन्यथा प्रतिपादितम्। शिशुमारं किल स्वस्तिकमध्यनीलवदनेन गृहीत्वा निजाङ्गेन ब्रह्माण्डमाक्रम्य कालचक्रं स्वपृष्ठाधारेण भ्रमयन् तदन्तमुखेन याम्यध्रुवकीलं गृह्णाति। मुखाभ्यामष्टाक्षरतेजोरूपेणोन्मिषं तद्वलादधःप्रदेशाधारं महाकूर्मेण धृत्वा वर्त्तते इति कालभ्रमे ग्रहाभ्रमन्तीत्युक्तम्, न तथा वक्तव्यम्, श्रुतिविरोधात्। तथाहि

"भीषास्माद्वातः पवते भीषोदेति सूर्यः।

भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः" ॥

इति उपक्रम्य जगदुपादानकारणं विवक्षितम्, अन्तेन ग्रन्थेन "स एको ब्रह्मण आनन्दः" इति। अतो 'अस्मात्' ब्रह्मण एव, 'भीषा'

भयेन, 'वातः पवते', 'भीषा', एव 'सूर्य्योऽपि', उदेति 'अग्निश्च', सर्वलोकेषु बहिरन्तर्व्यापकत्वेन वर्त्तते। 'इन्द्रः', त्रिलोकाधिपत्यं करोति। 'मृत्युरपि सर्वप्राणिहिंसाव्याजेन 'धावति', इति तस्मात् क्षपणक कालो ब्रह्मेति मूढबुद्धिं परित्यज्य शुद्धाद्वैतवृत्तिमाश्रय, तया जाग्रदाद्यवस्थात्रितयातीतमनोऽग्रं गुरुमुखाज्ज्ञात्वा मुक्तो भवसीति नियमितः क्षपणकः परमगुरुं नत्वा शुद्धाद्वैतविद्याश्रितोऽभवत् ॥

इत्यानन्दगिरिकृतौ क्षपणकमतनिवर्हणं नाम षट्चत्वारिंशत्प्रकरणम् ॥ ४६ ॥

---

## सप्तचत्वारिंशत्प्रकरणम् ।

---

ततः पितृुपासकाः सत्यशर्मकृतवर्मादयः समागत्य परमगुरुं नत्वेदमूचुः, स्वामिन्नस्मत्कृतं सावधानेन शृणु, पितृयजनमेव नियतं कर्त्तव्यम्, ते पितरः प्राचीना अग्निष्वात्तादयश्चन्द्रमण्डलोपरि स्वर्गे नित्यमुक्ताः सन्तो वसन्ति। विचार्यमाणे तेषां मध्ये अमूर्त्तयस्त्रयः, मूर्त्ताश्चत्वारः, तदुपासनमत्यन्तफलदमिति-कृत्वा तदन्येषामपि तदाधारत्वेन तत्तृप्तिद्वारा तेषामपि तृप्तिदर्शनात्, प्रतिवर्षगतखिन्नपितृदिनेषु सावत्यादिषु तदुपासनमेवास्माभिरादरात् कृतम्,

"श्राद्धकृत्सत्यवादी च गृहस्थोऽपि विमुच्यते"।

इति मोक्षहेतुत्वाच्च पितृमानेन चान्द्रमासस्य दिनरूपत्वात् मध्याह्नममा भवति, अर्थादर्द्धरात्रं, पूर्णिमा, शुक्लपक्षास्त-मस्तमयः, कृष्णपक्षार्द्धे सूर्योदयश्च। तस्मात् सर्वेऽपि गृहस्थाः श्राद्धं कर्म अमायां कुर्वन्त्येव, तत्तृप्ते तेषां मुक्तिरिति मुख्यत्वैरेव मुक्तिः, परमगुरुः पठति भोः सत्यशर्मकृतवर्मादयः शृणुध्वम्, भवन्मतमनर्हम्, कुतः, प्रमाणाभावात्। श्राद्धं कर्म कुर्वीतेति वचनमेव प्रमाणमिति यद्युच्यते तर्हि तेन कर्मणा मुक्तिरिति कथं, न कर्मणेति निषेधदर्शनात्। किं ब्रह्मविदा-

प्नोति परमित्यादीनि वाक्यानि नहि भवद्भिरधीतानि, पितृकर्मण्येवाधिश्रवणसूक्तं न वर्त्तते, नासदासीन्नोसदासीदित्यादौ तदेव विचारयध्वम्। कर्माङ्गसूक्तेनैव कर्मनिवृत्तिर्भवति, पितृसूक्तानां ब्रह्मपरत्वात्। अतो ये कर्मविहिता मन्त्रा वर्त्तन्ते तेषां त्रिविधरूपता कल्पनीया, विध्यर्थवादमन्त्रभेदात्। "अहरहः सन्ध्यामुपासीत," "ज्योतिष्टोमेन स्वर्गकामो यजेत" "न कलञ्जं भक्षयेत्" "न परदारान् गच्छेत्" इत्यादिवाक्यानि विधिपराणि। एतदावश्यकं कर्त्तव्यम्, एतदकर्त्तव्यमिति बाधरूपात् केचिदर्थवादा वर्त्तन्ते, "हरिश्चन्द्रो ह वै धर्म इक्ष्वाको राजा पुत्र आह, तस्य शतं जाया बभूवुः, तासु पुत्रं न लेभे, तस्य ह पर्वतनारदौ गृह ऊषतुः, स ह नारदं पप्रच्छ, इति जनको ह वैदेहो बहुदक्षिणेन यज्ञेनायजत, तत्र ह कुरुपाञ्चालानां ब्राह्मणा अभिसमेता बभूवुः, तस्य ह जनकस्य वैदेहस्य विजिज्ञासा बभूवेत्यादि। भृगुर्वै वारुणिर्वरुणं पितरमुपससार, अधीहि भगवो ब्रह्मेति"। अत्रेदं चिन्त्यते एतदर्थवादरूपाण्यंशानि नो दिव्यानि, प्रयोजनाभावात्। विधिमन्त्राभ्यामेव सर्वप्रयोजनसिद्धेरित्यत आह, अधिकरणरत्नमालायाम्,

"पारिप्लवार्थमाख्यानं किंवा विद्यास्तुतिस्तुतेः।
ज्यायोऽनुष्ठानशेषत्वं तेन पारिप्लवार्थकः" ॥

अस्यार्थस्तु अध्वरे महावेद्यां रात्रिषु राजानं सकूटमुपवेश्य तदग्रत एव वैदिकान्युपाख्यानानि अध्वर्युणा पठितव्यानि,

तदिहाख्यानं कर्म पारिप्लव आचक्षते नतु विद्यास्तुतिमात्र-माख्यानं प्रातःसायङ्कालयोरुचितहविर्होमानन्तरकालानुष्ठान-पूरणं किलाख्यानैर्भवतीति कृत्वा अनुष्ठानशेषत्वं ज्यायः श्रेष्ठं भवतीत्यर्थः। अतोऽनुष्ठानोपयोगित्वेनार्थवादा ग्राह्या भव-न्ति। मन्त्रास्तु गायत्र्यादयः। "तत्पुरुषाय विद्महे, महा-देवाय धीमहि, तन्नो रुद्रः प्रचोदयात्"। "नारायणाय विद्महे, वासुदेवाय धीमहि, तन्नो विष्णुः प्रचोदयात्"। "एह्य-ग्नये इह होता निषीदादब्धम्, पुरा एता भवानः, अवतां त्वा रोदसी, विश्वमन्ये यजामहे सौमनसाय देवान्" इत्यादयः। यस्मिन् कर्मणि यो मन्त्रो विधिदर्शितः स तस्मिन्नेव सदाङ्गीकर्त्तव्य इति अर्थे पर्यवसिते आर्यैरखण्डं निर्गुणं नित्यशुद्धबुद्धमुक्तस्व-रूपं ब्रह्म सर्वतन्त्रवाच्यमुन्नेयम्। श्रवणादिना कर्मणां गहन-त्वाद्वेदानां सगुणत्वाच्च। उक्तञ्च भगवद्गीतासु

"त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन"। इति।

अतो मुमुक्षुणा निस्त्रैगुण्येन भवितव्यम्। तस्माद्भवन्तोऽपि पवि-त्रादिधारणेन पितृकर्मप्रपञ्चप्रवृत्तिं गताऽनेकजन्मार्जितां परि-त्यज्य सद्गुरुमुखोत्थशेषमहावाक्यश्रवणादिना मुक्ता भवथ। "नान्यः पन्था विद्यतेऽयनाय" इति निषेधदर्शनात्, इत्युपदिष्टास्ते परमगुरुं नत्वा तदुपदेशबलात् कृतार्था अभवन्॥

इत्यानन्दगिरिकृतौ पितृमतनिवर्हणं नाम सप्तचत्वारिंशत्प्र-करणम्॥ ४७॥

## अष्टचत्वारिंशत्प्रकरणम् ।

---

ततः शेषोपासका गरुडोपासकाश्च शङ्खपादकुब्जारूढ-प्रभृतयः समागत्य स्वामिनमिदमूचुः, भो गुरो मदीयं मतद्वयं अतिविचित्रतरं शृणु, शेषः किल भूभर्त्ता भगवतो नारायणस्य तल्परूपेणान्तरङ्गः, ततः किल तस्मात्तदाकाराकारितनर्षणधारणमात्रेण* मुक्ता वयमिति, गरुडः किल सर्वलोकरुचिप्रवेशं भगवन्तं स्वोपर्य्यारोह्य सञ्चरते इत्युत्कर्षेण तदुपासकाश्च नित्यमुक्ता वयं भगवद्भक्ताग्रगण्या इति प्राप्ते पूर्वपक्षे परमगुरुः पठति भोः शङ्खपाद, कुब्जारूढ, भवद्विवेकः किमु वक्तव्यः। नारायणस्य तत्परिवाहनोपासनेन मुक्तिरित्युक्तम्, तदत्यन्तदुर्घटम्, तर्हि नारायणोपासनमेव कुरुतात्, तस्य सर्वात्मत्वात् ब्रह्मांशकत्वाच्च। परम्परया चित्तशुद्ध्यनन्तरं परमगुरूपदिष्टमार्गेण मुक्ता भवथ, इत्येवमुक्तौ तौ आचार्यं नत्वा शिष्येभ्यः शुद्धाद्वैतविद्याश्रितौ बभूवतुः ॥

इत्यानन्दगिरिकृतौ शेषगरुडमतनिवर्हणं नामाष्टचत्वारिंशत्प्रकरणम् ॥ ४८ ॥

---

* तदाकारपूगधारणमात्रेणेति वा पाठः ।

## एकोनपञ्चाशत्तमप्रकरणम्।

---

ततः सिद्धोपासकाश्चिरकीर्त्तिजनितानन्दपराङ्कुनादयः समागत्य स्वामिनमिदमूचुः, भोः स्वामिन् मदीयमतमतिविचित्रतरं किल मदुपास्यानां सिद्धानां विचित्रत्वात्। अतः सिद्धोपदेशपरिलब्धसकलमन्त्रबुद्धयो वयं कृतार्था मुक्ताश्च। तस्मात् भवन्तोऽपि सिद्धमतावलम्बिनो भवथ। श्रीशैलादिभगवदाविर्भूतस्थलेषु मन्त्रौषधविशेषान् प्राप्य मत्स्येन्द्रनाथादिसिद्धाः कृतार्थाश्चिरञ्जीविनश्च बभूवुः। तदुपदेशेन तथाविधा वयम्, अस्माभिः सर्वप्रपञ्चो विदितः किल, तत्कथमित्युक्ते निधिनिक्षेपाञ्जनदर्शनमोहनस्तम्भनवश्यवादिस्तम्भनादिविद्याविशेषैः, अत्याहारानाहारजलाग्न्याकाशपृथ्वीजयसलिलजयवह्निजयवायुजयादिविद्याविशेषैः, विशेषेण पारदपानतैलपानप्रभृतिभिश्च अपमृत्य्वकालमृत्युहरप्रवृत्तिभिर्योगविशेषैः, अकालवर्षाकाल्माशनिपातवृश्चिकवर्षसर्पवर्षवह्निवर्षशिलावर्षादनुवर्षनक्षत्रवर्षग्रहवर्षप्रभृतिभिः क्रियाविशेषैः, सलिलवर्षक्षीरवर्षदधिवर्षमध्वाज्यवर्षसुरावर्षामृतवर्षकनकवर्षादिभिः शक्तिविशेषैः, कुसुमवर्षान्नवर्षधान्यवर्षादिभिर्यक्षिणीविशेषैः, मीनवर्षपशुवर्षयुवतिवर्षादिभिर्मोहिनीविशेषैः, भूम्युत्क्षेपणसलिलोत्क्षेपणवज्रोत्क्षेपणसलिलवायूत्क्षेपणतरूत्क्षेपणरिपूत्क्षेपणाद्युद्देश्यकविद्यारूपमन्त्रविशेषैः, गृहदाहग्रामदाहपुरदाहारण्यदाहादिभूदाहेति विद्यामन्त्रविशेषैः, स्त्रीपुरुषाकृतिकरण-

पुरुषस्याकृतिकरणशत्रुजयसेनाजयस्त्रीजयादिकचषटिकादिवि-
द्याप्रभेदैः, अयःकरणताम्रकरणरजतकरणहेमकरणादिधातुविद्या-
प्रभेदैः, दृष्टिनिर्बन्धनसिंहशरभव्याघ्रादिदुष्टमृगबन्धनादीन्द्रजाल-
महेन्द्रजालादिमन्त्रमूलिकाकज्जलविशेषैः, एतदाद्यनेकविशेषैर्वयं
सर्वज्ञा एवाद्यास्महे, तस्मादनन्यभेद्यमस्मन्मतमिति प्राप्ते भगवा-
नाचार्यः पठति, भोश्चिरकीर्त्तिनित्यानन्दपराञ्जुनादयः किमनि-
त्यफलेप्सुभिर्भवद्भिः सम्भाषणमपि नाहं कुर्व्वे, कुतः, किं विचित्र-
वेषैः प्रयोजनं विद्यते, निधिनिक्षेपाद्यञ्जनादिभिः परद्रव्याप-
हारदोषप्राप्तिमात्रमेव फलम्, चिरजीवित्वादिभिर्न मुक्त्युपायः
सम्भवति, देहस्य दुःखालयत्वात्, तत्परित्यागेन ब्रह्मप्राप्त्युपायो-
बुद्धिमद्भिः सम्पादनीयः। तस्य गुर्व्वधीनत्वात्तन्मुखपद्मविगलद्वा-
दयामृतपानपरायणानित्यमुक्ताः सुखिनश्च भवन्ति । तदन्ये
पुनर्दुःखालयमेव शाश्वतं संसारं नित्यं यान्ति, चिरजीविनां
सुखमिति यद्युच्येत, तर्हि युगान्तरे मन्वन्तरे वा सर्वलोकजरा-
मृत्युकालविलयोऽस्त्येव, तत्रापि पुनर्दुःखप्राप्तिरेव स्यात्। त-
स्मान्मुक्तानां यत्सुखं नित्यानन्दरूपं वर्त्तते, न तदन्येषां तत्, क्लेशा-
भावान्मुक्त्युपाय एव सुखेच्छुभिरनुदिनं चिन्तनीय इत्युक्तास्ते परम-
गुरुमाचार्यस्वामिनं नत्वा तदुपदेशबलान्मनोन्मन्यां मनोलयं
कृत्वा नित्यतेजःकूटरूपब्रह्मानुसन्धानं कुर्वन्तः श्रियतरा बभूवुः॥

इत्यानन्दगिरिकृतौ सिद्धमतनिवर्हणं नामैकोनपञ्चाशत्तम-
प्रकरणम्॥ ४९॥

## पञ्चाशत्प्रकरणम् ।

ततः परं गानशीलाः विश्वावसुनामगन्धर्वकन्यकापत्युपासकाः पञ्चोक्तमिथिलांगतगुण्डगानादयः परमगुरुं नत्वेदमूचुः, स्वामिन् वयं किल कृतार्थाः, मदीयमतमखिलपरमानन्ददम्, विश्वावसूपासनेन विदितगानकारणनादोपासनपरिलब्धवर्णातीतविन्दुकलाः, ध्यानसम्भूतकलानुभव एव ब्रह्मानुभव इति कृत्वा नित्यमुक्ता एव, तस्माद्भवन्तोऽपि मुक्त्यभिलाषिणः सदा गान्धर्वविद्यापरिश्रमं कुरुध्वमिति प्राप्ते भगवान् पठति, ननु नादज्ञानेन ब्रह्मावाप्तिरित्युक्तम् । तदयुक्तम् । श्रुतिविरोधात्, ब्रह्मणः शब्दाद्यतीतत्वाच्च, विन्दुकलयोरपि सगुणत्वात् ।

"नादविन्दुकलातीतं यस्तं वेद स वेदवित्" इति स्मृतेः ।

"अशब्दमस्पर्शमरूपमव्ययं

तथाऽरसं नित्यमगन्धवच्च यत् ।

अनाद्यनन्तं महतः परं ध्रुवं

निचाय्य तं मृत्युमुखात् प्रमुच्यते" ॥ इति कठश्रुतेः ।

तस्मान्नादविन्दुकलातीतं परममद्वयं नित्यशुद्धबुद्धमुक्तस्वरूपं शुद्धं ब्रह्म उपासकानां निजैक्यकरणदक्षं सदा भजध्वम्, तद्द्वारा मुक्ता भवथेत्युपदेशमङ्गीकृत्य शिष्यास्ते बभूवुः ॥

इत्यानन्दगिरिकृतौ गन्धर्वमतनिवर्हणं नाम पञ्चाशत्प्रकरणम् ॥ ५० ॥

## एकपञ्चाशत्प्रकरणम्।

ततः केचित् चितिभस्मव्याप्तसर्वाङ्गाः शल्यविशेषभूषितमणिबन्धगला भूतराडुपासकाः स्वामिनं नत्वेदमूचुः, स्वामिन् अस्मन्मतं शृणु, भूतराजाः सप्त सप्तलोका इव तालप्रमाणदेहिनोवर्त्तन्ते। उपासकानां प्रत्यक्षं तदुपासनेन शत्रुजयादिफलमस्तीति, गणकर्त्ता वेतालः। तदुपासकानामस्माकं सर्वलोकवशङ्करं रूपं फलमस्तीति प्राप्ते पूर्वपक्षे भवद्भिरेवमुक्तम्, भूतवेतालोपासका भवन्मतमनर्हमेव भवति, ब्राह्मणानां नित्यकर्मादि परित्यज्य भूतादेरुपासनानर्हत्वादवेदमूलकत्वाच्च, तदुपासनमनर्हमेव।

"अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः।
ये भूता विघ्नकर्त्तारस्ते नश्यन्तु शिवाज्ञया"॥

इति वचनाच्च ब्रह्मकर्मप्रतिबन्धकरूपभूतार्चनं ब्राह्मणानामयुक्तम्, तदन्येषां रागद्वेषादिरज्जुबद्धानामन्योन्यहानिमभीप्सूनां तद्विद्यावैशद्यप्रत्यासक्तिरिति सिद्धान्तः। यूयं ब्रह्मकुलजा एवमुक्ताचारं परित्यज्य शुद्धाद्वैतविद्याश्रिता वर्णोचितकर्मशीला भवथ। स्वकर्मभ्रष्टानां नहि गतिरिति, अमुत्र फलदेति गोविन्दभगवत्पूज्यपादशिष्यैरभिहितमस्माभिरित्युक्ताः क्रोधदण्डविद्वेषरागादयः स्वामिनं नत्वा तदुपदेशविदिततत्तत्कर्मशीलाः शुद्धाद्वैतविद्यानिरताः पञ्चपूजापरायणा बभूवुः॥

इत्यानन्दगिरिकृतौ भूतवेतालमतनिवर्हणं नामैकपञ्चाशत्प्रकरणम्॥ ५१॥

## द्विपञ्चाशत्प्रकरणम् ।

---

एवमशेषमतनिवर्हणं कृत्वा दिनमणौ मध्यन्दिनङ्गते मणिकर्णिकातीरे निदिध्यासनलालसे परमगुरौ भगवान् व्यासः किल स्थविरब्राह्मण इव समागत्य षट्सहस्रशिष्यसमेतं प्रमथाधिकृतमीशमिव, देवावृतमिन्द्रमिव ऋष्यावृतं ब्रह्माणमिव दृष्ट्वा कोऽयमित्याक्षिपत्। शिष्यास्तं मायावेशधारिणमिदमूचुः,

शृणु, वृद्ध, परानन्द गुरुः शङ्करनामकः ।
सेतुप्रभृतिदेशेषु मतध्वंसमथाचरन् ॥
भाष्यं कृत्वा ब्रह्मसूत्रतात्पर्यार्थविनिर्णयम् ।
अद्वैतार्थावबोधेन शिष्यान् कृत्वा विवेकिनः ॥
जयत्येव हि गङ्गायाम्भीराविर्भूतचन्द्रवत् ।

एवमुक्तः स्थविरोऽपि शिष्यसङ्घमतीत्य कम्पत्पलितवदनशिराः शङ्कराचार्यमिदमाह, यत्र भवताधिकृतः किमु ब्रह्मसूत्रपरिश्रमः। परमगुरुराचार्यं समीक्ष्यैवमवादीत्, भो विप्र कुत्र भवतः प्रवेशस्तत्रैव वक्ष्यामीति। वृद्धः पुनराह, तदन्तरमतिपन्नौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्यामिति सूत्रस्य कोऽर्थो भवताधिकृतः। पुन-

अंगाद् परमगुरुः, भूतसूक्ष्मैः सम्परिष्वक्त एव 'तदन्तरप्रतिपत्तौ' देहान्तरप्रतिपत्तौ, 'रंहति' गच्छति, जीवो लिङ्गशरीरबन्धः परलोकमिति। वृद्धोऽप्येवमाह, भूतानां सर्वदेशसमत्वात्कर्मानुकूले गात्रग्रहणं तत्रैव करोतु यत्रैवारब्धव्या इति। पुनः परमगुरुराह, वृद्ध मूढतर तत्त्वमस्य न विदितं भवता। तथाहि, स्वदेहवीजभूतैर्भूतसूक्ष्मैः सम्परिष्वक्त एव गच्छतीत्यवगन्तव्यम्, कुतः, प्रश्ननिरूपणाभ्याम्। तथाहि, प्रश्नो यथा "पञ्चम्यामाहुतावापः-पुरुषवचसो भवन्तीति"। निरूपणञ्च द्युलोकपर्जन्यपुरुषयोषित्सु श्रद्धासोमवृष्ट्यन्नरेतोरूपाः पञ्चाहुतीर्दर्शयित्वा "पञ्चम्यामाहुतावापःपुरुषवचसो भवन्तीति", तस्मादद्भिः परिवेष्टितो जीवो यातीति गम्यते। भो यते, अन्या श्रुतिः, "जलौकावत्पूर्वदेहं न मुञ्चति यावद्देहान्तरं नाक्रामतीति"। भो वृद्ध, तत्राप्यपरिवेष्टितस्यैव जीवस्य कर्मोपस्थापितप्रतिपत्तव्यदेहविषये भावनादीर्घीभावमात्रं जलौकयोपमीयते इति। पुनर्वृद्ध इदमाह, व्यापिनां करणानां आत्मनश्च देहान्तरप्रतिपत्तौ कर्मवशाद्वृत्तिलाभस्तत्र भवति, इन्द्रियाणि तु देहवदभिनवान्येव तत्र तत्र भोगस्थाने उत्पद्यन्ते, मन एव हि केवलं भोगस्थानमभितिष्ठते, जीव एव उत्प्लुत्य देहाद्देहान्तरं प्रतिपद्यते, शुकइव वृक्षाद् वृक्षान्तरमिति। यतिः पठति, भवन्मतमनर्थं, श्रुतिविरोधात्। तत्र श्रुतिः, "न तस्य प्राणाह्युत्क्रामन्ति तत्रैव समवलीयन्ते" इति। ननु उदाहृताभ्यां प्रश्नप्रतिवचनाभ्यां केवलाभिरद्भिः सम्परिष्वक्तो

'रंहति' प्राप्नोति, अपशब्दग्रहणसामर्थ्यात्। तत्र कथं सामान्येन प्रतिज्ञाय सर्वैर्भूतसूक्ष्मैः सम्परिष्वक्तो रंहति, इति यद्युच्येत, तत्रैवमुत्तरं, सूत्रमेव त्र्यात्मकत्वात् भूयस्त्वात्तत्, तुशब्देन चोदितामाशङ्कामुच्छिनत्ति, "त्र्यात्मका ह्यापस्त्रिवृत्करणश्रुतेः। तास्त्वारम्भकास्त्वभ्युपगम्यमानाः खेतरदपि भूतद्वयमवश्यमभ्युपगन्तव्यम्, त्र्यात्मकश्च देहस्त्रयाणां तेजोऽबन्नानां* तदस्मिन् कार्योपलब्धेः पुनश्च त्र्यात्मकः त्रिधातुत्वात्, त्रिभिर्वातपित्तश्लेष्मभिर्न सम्भूतान्तराणि प्रत्याख्याय केवलाभिरद्भिरारम्भः शक्यते, तस्मात् भूयस्त्वापेक्षायामापः पुरुषवचस इति प्रश्नप्रतिवचनयोरपशब्दो न कैवल्यापेक्षः। सर्वदेहेषु रसलोहितादिवस्तु दृश्यते, पार्थिवो धातुर्भूयिष्ठो देहिषूपलक्ष्यते, इति यद्युच्येत, नैष दोषः। इतरापेक्षया अपां बाहुल्यं भविष्यति। दृश्यते च शुक्रशोणितलक्षणेऽपि देहवीजे द्रवबाहुल्यं, कर्म च निमित्तकारणं देहारम्भे, कर्माणि चाग्निहोत्रादीनि, सोमाज्यपयःप्रभृतिद्रवद्रव्याश्रयाणि कर्माणि, कर्मसमवायस्य चापः श्रद्धाशब्दोदिताः सह कर्मभिर्द्युलोकाग्नौ हूयन्त इति वक्ष्यते। तस्मादप्यपां बाहुल्यप्रसिद्धिः। बाहुल्यादप्यप्शब्देन सर्वेषामेव देहवीजानां भूतसूक्ष्माणामुपादानमिति निरवद्यम्। सूत्रान्तरं, "प्राणगतेश्च प्राणानां देहान्तरप्रतिपत्तौ गतिः"। श्रूयते "तमुत्क्रामन्तं प्राणो-

* त्रयाणामप्तेजोवायूनामिति क्वचित्पाठः।

ऽनूत्क्रामति" प्राणमुत्क्रामन्तं प्राणा अनूत्क्रामन्ति" इत्यादि श्रुतिः। सा च प्राणिनां गतिराश्रयमन्तरेण न भवतीत्यतः प्राणगतिप्रयुक्ता तदाश्रयभूतान्तरोपस्थष्टानां गतिरर्थादवगम्यते। नहि निराश्रयाः प्राणाः क्वचित्तिष्ठन्ति, गच्छन्ति वा जीवतोऽदर्शनादित्याग्रहेण जल्पतो वृद्धस्य कपोलताडनमाचकार। परं पद्मपादं निजशिष्यमिदमाह, एनं परपक्षश्रेष्ठं वृद्धमधोमुखं पातयित्वा पादाग्रावलम्बनाद्दूरं त्यजेति। स तु गुरुभिरेवमुक्तो तूष्णीमास। यतिराड्वाक्यश्रवणात् स्वयमेवाशु दूरमगमत्। ततः शिष्यः परमगुरुं नत्वा इदमाह।

शङ्करः शङ्करः साक्षात् व्यासो नारायणः स्वयम्।
तयोर्विवादे सम्प्राप्ते किङ्करः किं करोम्यहम्॥

इत्येवमुक्तः स्वामीदमाह, स एव व्यासश्चेदनुपममतिः सोऽयमपि मामवतु अद्वैतार्थेऽप्यनुभववहिरस्सस्तितिर्यदि, यथाभानुर्मध्यादिषु समकरः, सर्वभुगपि पूज्यो वह्निश्च प्रभाकरणात्, दुःखन्त्यजतु सपदि तन्मद्वाक्योत्थं परज्ञानात्,

आयातु स्वयमेवात्र व्यासः शिष्यजनप्रियः।
अद्वैतभाष्यकर्त्तारं पातु नो वादरायणः॥
स एव परमार्थश्चेद्भिदामिथ्या भवेद्यदि।
व्यासं संयमिनां श्रेष्ठं शरणं यामि सर्वदा।
स एवाद्य प्रसन्नात्मा हरत्वखिलतामसम्॥

शङ्कराचार्येण एवं स्तुतो व्यासः सर्वज्ञ इव समक्षमाविरासीत्, गुरुः स्वामिनं नत्वा तस्य द्वादशप्रदक्षिणाभिर्वन्दनानि कृत्वा त्वदंशस्त्वच्छिष्योऽहमिति विज्ञाप्य निजकृतब्रह्मसूत्रभाष्यमवदत्। स तु भाष्यं सम्यगवलोक्य परमगुरुमालिङ्ग्य इदमुवाच।

सूत्राणान्तु पदार्थैकतात्पर्यं विदितं त्वया।
महाशयस्तु दुर्ज्ञेय आचार्यस्त्वं जगत्पतिः॥
शिव इव शिष्यजनौघैर्व्याचर भाष्यमुपदिशन्मम।
शुद्धाद्वैतविदः कुरु लोकानन्यमार्गानन्यान्॥

इत्यानन्दगिरिकृतौ व्यासदर्शनं नाम द्विपञ्चाशत्प्रकरणम्॥ ५२॥

## त्रिपञ्चाशत्प्रकरणम्।

---

एवमुक्त्वा तु स स्वामी उवाचेमं मुनीश्वरम्।
मत्वेदमाह सर्वज्ञ मदंशोऽद्य भविष्यति ॥
प्राणे प्रणवं वीक्ष्याथ याच्यसि त्वं दयानिधे।
त्वत्पादसन्निधेर्योगान्मुक्त एवाहमद्य वः ॥
इत्युक्तः शङ्कराचार्यमिदमाह घृणान्वितः।
कथं प्रसिद्धं भाष्यं स्याद्गते त्वयि *जगत्त्रयम् ॥
तस्मादद्वैतबोधाय स्थिरो भव परावरे ॥
आश्चर्योऽप्येवमाचार्यः पुनराह मुनीश्वरम्।
षोडशेषु शरत्स्वेव यदायुःस्थितिरित्यतः ॥
व्यासस्त्वाकर्षयामास ब्रह्माणं सृष्टिकारणम्।
ब्रह्माप्यवादीदेवं हि स्वतन्त्रः शङ्करं प्रभुं ॥
दुष्टाचारविनाशाय प्रादुर्भूतो महीतले।
स एव शङ्कराचार्यः साक्षात्कैलासनायकः।
यावदिच्छाब्दमुर्व्यां हि स्थित्वा पश्चाद्गमिष्यति ॥

इत्यानन्दगिरिकृतौ ब्रह्मदेववचनं नाम त्रिपञ्चाशत्प्रकरणम् ॥ ५३ ॥

---

* जगत्पते इति क्वचित् पाठः।

## चतुःपञ्चाशत्प्रकरणम् ।

---

इति शाम्भवचः श्रुत्वा व्यासः काशीकृतालयः ।
करेणानीय गङ्गाम्बु जीव त्वं शरदां शतम् ॥
इत्युक्त्वा प्रोक्षयामास शङ्कराचार्यमुत्तमम् ।
व्यासदत्तायुरुत्कृष्टतेजःपूर्णकलेवरः ॥
बभौ श्रीशङ्कराचार्यो ब्रह्मव्यासयुतस्तदा ॥
विष्णुवागीशसंयुक्तमहादेववदद्भुतम् ॥
स तु नत्वा मुनिश्रेष्ठं ब्रह्माणं पारमार्थिकः ।
कृतार्थोऽस्मि भवत्पाददर्शनादित्यभाषत ॥
भूर्णशाचार्य भिदा मिथ्या अद्वैतं पारमार्थिकम् ।
उपदेशं नृणामेवं कुरु यत्नेन सर्वतः ।
इत्युक्त्वान्तर्दधे ब्रह्मा व्यासश्च भगवानृषिः ।

इत्यानन्दगिरिकृतौ व्यासदत्तायुःप्रपञ्चनं नाम चतुःपञ्चाशत्प्रकरणम् ॥ ५४ ॥

---

## पञ्चपञ्चाशत्प्रकरणम्।

---

तस्मात् उदङ्मार्गमवलम्ब्य अमरलिङ्गं केदारलिङ्गं दृष्ट्वा कुरुक्षेत्रमार्गात् बदरीनारायणदर्शनं कृत्वा तत्र शीतलोदकस्नानस्यातिदुःसहत्वात् हिमवत्सान्निध्याच्च भगवन्तमिदमुवाच, भो नारायण स्नानाय उष्णोदकं नो देहि, इति। स तु नारायणः स्फटिकादधःप्रदेशात् उष्णतीर्थसरितमुत्पादयामास। सर्वे द्विजाः स्नात्वा शङ्कराचार्यन्तुष्टुवुः। तस्मात् द्वारकादिदिव्यस्थलविलोकनात् प्रादक्षिण्यमयोध्यां प्राप। तस्मात्पुरात् गयायामोशानादिदर्शनं कृत्वा गङ्गासहस्रनामसकलस्नानमाचरन् जगन्नाथमार्गात् पर्वतं प्राप। तत्र महादेवं मल्लिकार्जुननामानं तच्छक्तिमद्वैतविद्यारूपिणीं भ्रमराम्बां नत्वा, तत्र मासमास्थिते परमगुरौ रुद्राख्यपुरात् ब्राह्मणाः समागम्य परमगुरुमिदमूचुः, स्वामिन्, भट्टाचार्याख्यो द्विजवरः कश्चिदुदग्देशात्समागत्य दुष्टमतावलम्बिनो बौद्धान् जैनानसङ्ख्यातान् राजमुखादनेकविद्याप्रसङ्गभेदैर्निर्जित्य तेषां शीर्षाणि परशुभिश्छित्वा बहुषु उलू-

स्थलेषु निक्षिप्य कटभ्रमणैस्सूर्णीकृत्य चैवं दुष्टमतध्वंसमाचरन् निर्भयो वर्त्तते इति।

श्रुत्वैतदद्भुतं कर्म गुरुः शिष्यसमन्वितः।
प्राप्तो रुद्राख्यनगरं जयशब्दविजृम्भितम्॥

तत्र द्विमदशकपूर्वकाले भट्टाचार्यः सर्वविपक्षध्वंसं कृत्वा जैनगुरु-मुखात्कश्चिद्विद्यालेशोजात इति गुरुवधप्रायश्चित्तं विचार्य स्वशे तुरगतकारिकाप्रमाणेपत्यकाकरीषोपरि होमाग्निना पर्... क्रमाद्दग्धेन वसितव्यमिति निश्चित्य विजनप्रदेशे तथा क... यित्वा तत्र कृतप्रायश्चित्तदीक्षः स तु करीषपर्वतापव... समवर्त्तत। तदानीं परमगुरुर्भट्टाचार्यं वीक्ष्येदमाह,

अज्ञानेन किल प्राप्ता व्यवस्था भवता द्विज।
ईदृशान् मूढ गूढार्थान् न वेत्सि निगमान् यतः॥
"हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम्।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते"॥

इति श्रुतेः। इत्युक्तो जानुमात्रदग्धोऽपि भट्टाचार्यः परमगुरु-मिदमुवाच, आपत्कालानागतो नूतनो बौद्धतरः कस्मात् इहागत्य उत्तापयसि। गुरुराह, नाहं बौद्धः, किन्तु शङ्कराचार्यः, शुद्धाद्वैतमार्गदाता प्रसङ्गार्थमिहागतोऽस्मि, इति वचनं निशम्य पुनर्भट्टाचार्यः प्राह तथाऽदग्धशेषशरीरः, मङ्गिनीभर्त्ता

मण्डनमिश्रः सर्वज्ञ इव सकलविद्यासु पितामह इव वर्त्तते । तेन साकं भवद्वादकण्डूतिनिवृत्तिपर्य्यन्तं प्रसङ्गं कुरु । अह-मतिकर्मविपाकधर्मसूत्रबद्ध इव भवस्थया परलोकं यामि । मे भवद्दर्शनं प्रतिफलदमासीत् इत्युक्त्वा निमीलिताक्षः सर्वान्तःस-म्प्रज्ञारूढबुद्धिरासीत् । ततः परमगुरुरपि सर्वजनस्तूयमानविभवः पुनः पट्टणं प्राप्य रुद्राख्यपुरवासिनः सर्वान् अद्वैतमार्गाश्रितान् चकार ॥

इत्यानन्दगिरिकृतौ भट्टदर्शनं नाम पञ्चपञ्चाशत्प्रकर-णम् ॥ ५५ ॥

## षट्पञ्चाशत्प्रकरणम्।

---

ढक्काशङ्खतालध्वनिभिर्जयशब्दैर्वन्दिमागधसूतस्तवैः पञ्चपादादिशिष्यकृतकरतालैर्दिक्करिकर्णकुहरबधिरत्वं सम्पादयन्तः श्रीपरमगुरुप्रमुखाः कुवेरदिग्भागमवलम्ब्य हस्तिनपुरादाग्नेयदिग्भागस्थलं विद्यालयमतिप्रसिद्धं, तद्देशवासिनस्तु त्रिजिलत्रिन्दुरिति वदन्ति, तत्पुरं प्राप्य तत्पुरान्तराले चतुर्योजनविस्तारे प्रत्यग्दिशि क्रोशमात्रसमचतुरस्रभूमिनेमिभागे तालतरुच्छन्नां शालां निर्माय तन्मुखे शतहस्तप्रमाणं परस्पराभिमुखं वेदिकाद्वितयं तदुपर्य्योतप्रोतदारुपञ्जरबद्धशुकपञ्जराणि अनेकानि कल्पयित्वा तत्र पञ्चशतशिष्यानेकैकशास्त्रपारीणान् मण्डनमिश्र आचतुर्मुखेभ्यो ब्रह्मा इव सहस्रवदनेभ्योऽहिराज इव पञ्चास्येभ्यो रुद्र इव षड्दर्शनपाठपराक्रमितान् नानानदसमुद्रप्लवमानान् शिष्यान् अखिलाशाजयसमर्थानाचकार। तच्छाखान्तरे सेवकैर्दासीदासजनैः कूपतडागादि निर्माय तद्वारिपरिषद्धसकलशस्यारामादिभिः प्राप्तान्नशाकादिभिरेव प्रत्यहमखिलशिष्यैः सह पञ्चसोपेतान्नभक्षणपरितृप्ततनुर्निवसन्, अर्थात् प्राप्ते पैतृकदिने निमन्त्रितब्राह्मणार्थनिमित्तं पितृस्थानाय व्यासं मन्त्रशक्तिबलादागतं निमन्त्रयामास। विश्वे देव-

स्थानीयतत्समब्राह्मणाभावात् लक्ष्मीनारायणरूपं शालग्रामं निमन्त्र्य कृतसकलपाकया विजयवत्या, पितृसमर्चनं कुरु पाको जात इति गृहीतवचनः शुचिः प्रसन्नहृदयो मण्डनमिश्रः पवित्रभूषितकरकमण्डलुकूर्चाधरो माध्याह्निकब्रह्मयज्ञवैश्वदेव-कर्माणि कृत्वासन्य पदे सङ्कल्प्य क्षणं (१) देवार्थे शालग्रामे दत्वा पित्रर्थे व्यासकरे दत्वा गृहाङ्गणे चतुरस्रवर्त्तुलमण्डल-द्वयं कृत्वा तत्पूजां विधिवदाचरित्वा स्वयं प्रत्यङ्मुखो भूत्वा देवस्थाने क्षणं दत्वा शालग्रामं दर्भोपरि सन्निवेश्य विश्वेदेव-ध्यानमाचरन्नास। तदानीं किल परमगुरुः सर्वशिष्यान् तत्पुरपूर्वभागोद्यानेषु सन्निवेशयित्वा स्वयं पुरं प्रविवेश। भानौ खस्वस्तिकारूढे पुरः प्रत्यग्भागमार्गे किल दारकदम्बं वीक्ष्य मण्डनमिश्रालयः कुत्रास्ति इत्यब्रवीत्। तत्पृष्टास्ताः परम-गुरुं प्रत्यूचुः,

प्रत्यक्षशब्दान्तविधिप्रभेदैः
शुकाङ्गना यत्र गिरं वदन्ति।
द्वारे तु नीडान्तरसन्निरुद्धाः
अवेहि तन्मण्डनमिश्रधाम॥
जीवेश्वरैक्येन भिदाप्रभेदैः
शुकाङ्गना यत्र गिरं वदन्ति।
द्वारे तु नीडान्तर इत्यादि॥

---

(१) पितृपक्षे तिलदर्भाणां क्षणं इति सञ्ज्ञा देवपक्षे यवदर्भाणाम्।

शब्दान्तसत्प्रत्ययधातुवादैः
शुकाङ्गना यत्र गिरं वदन्ति ।
द्वारे तु इत्यादि ॥
यागादिविप्रोचितकर्मकर्त्री
शुकाङ्गना यत्र गिरं वदन्ति ।
द्वारे तु इत्यादि ॥
मन्त्रादिराजस्य विधानभेदैः
शुकाङ्गना यत्र गिरं वदन्ति ॥
द्वारे तु इत्यादि ॥
जैनोक्तिभिः कालविदुक्तिभेदैः
शुकाङ्गना यत्र गिरं वदन्ति ।
द्वारे तु इत्यादि ॥
कापालिकैर्भैरवपक्षपादैः
शुकाङ्गना यत्र गिरं वदन्ति ।
द्वारे तु इत्यादि ॥
भक्त्यादिभिः शैवमतप्रभेदैः
शुकाङ्गना यत्र गिरं वदन्ति ।
द्वारे तु इत्यादि ॥
गणेशविष्ण्वर्कपरात्मवाद्यैः
शुकाङ्गना यत्र गिरं वदन्ति ।
द्वारे तु इत्यादि ॥

काव्यादिभिर्नाटकसिद्धवादैः
शुकाङ्गना यत्र गिरं वदन्ति।
द्वारे तु इत्यादि॥
आकर्षणोच्चाटनसिद्धमन्त्रैः
शुकाङ्गना यत्र गिरं वदन्ति॥
द्वारे तु नोडान्तरसन्निरुद्धाः
अवेहि तन्मण्डनमिश्रधाम॥

इत्यादिकान् बहुधा दासीवचनसन्दर्भसञ्जातश्लोकान् श्रुत्वा महदाश्चर्यसम्मिश्रः परमगुरुर्युवतिसङ्गमतीत्य मण्डनमिश्रगृहं प्राप्य कवाटगुप्तं दुःप्रवेशमिति विचार्य प्राणायामबलाद्गगनमार्गेणान्तःप्रविश्य मण्डनमिश्रकृतपूजाप्रसन्नविश्वेदेवमण्डले क्षणादवतिष्ठत। तदानीं मण्डनमिश्रो विश्वेदेवान् सङ्कल्प्य शालग्राम स्वागतमिति दर्भाक्षतप्रोक्षणकाले शङ्कराचार्यपादद्वयं मण्डलस्थं ददर्श। ततः सर्वाङ्गानि वीक्ष्य क्षणेन किलायं सन्न्यासीति ज्ञात्वा कोपकोलाहलचित्तः कुतो* मुण्डीत्यवादीत्, इति प्रथमवाक्यं मिश्रस्य। द्वितीयवाक्यं गुरोः, सर्वं न ज्ञातव्यम्, आगलान्मुण्डी, सुरा पीता, सा हि सुरा श्वेता, किं मत्तः गृहस्थेषु, किं जडधामतङ्गीतिकदेहे, किं निर्भाग्य, यत्यर्चामंहृत एव निर्भाग्यः, किं दूषकतत्पातकवति, किं चोरटत्याश्रित अरिवर्गपीडितस्येव अप्रार्थितनिमन्त्रिताभ्यागतो वि-

* कुतोऽयमित्यवादीदिति क्वचित्पाठः।

श्चरहमित्यादिवाक्यानि व्यासः श्रुत्वा पाद्यं दीयतामिति प्राह मण्डनमिश्रं। पाद्यग्रहणकाले वादार्थमागतोऽस्मीति गुरुर्जगाद। मण्डनमिश्रोऽपि भोजनानन्तरं तदा करोमि इत्यवदत्। यथाविधि पितृकर्म निर्वर्त्य वादार्थं पणमेवं व्याचक्रतुः, गृहस्थोऽहमपि यदि पलायितः सन्न्यासी भवेयम्, अहमपि यदि वादे पलायितः, गृहस्थो भवामीति, उभयपक्षग्रहणसमर्थां मण्डनमिश्रपत्नीं कृत्वा सरसवाणीनाम्नीं प्रसङ्गोपक्रममाचक्रतुः। निगमादिसर्वविद्यासु प्रसङ्गे क्रियमाणे शतदिनात्परं प्रतिपक्षस्य स्खलितं श्रुत्वा स्खलित इति निश्चित्य महानसात्पतिसमीपं गत्वा सरसवाणी सर्वज्ञा किञ्चिदमब्रवीत्, नाथ मण्डनमिश्र, एहि भिक्षार्थे, एवमुक्तवती सारसवाणी,

'कथां वहसि दुर्बुद्धे गर्द्दभेनापि दुर्भराम्।
शिखायज्ञोपवीताभ्यां कथं भारो भविष्यति' ॥
'कथां वहामि दुर्बुद्धे तव पित्रादिदुर्भराम्।
शिखायज्ञोपवीताभ्यां श्रुतेर्भारो भविष्यति' ॥

महानसात्समागम्य सरसवाणी सर्व्वज्ञा किञ्चिदमब्रवीत् नाथ मण्डनमिश्र विहिता भिक्षेति तां परमगुरुस्तुष्टाव, तदानीं मण्डनमिश्रः परमगुरुचरणारविन्दं नत्वा तदुपदेशेन सन्न्यासी भूत्वा कुवेरदिशमभजत् ॥

इत्यानन्दगिरिकृतौ मण्डनमिश्रजयाभिधानं नाम षट्पञ्चाशत्प्रकरणम् ॥ ५६ ॥

## सप्तपञ्चाशत्प्रकरणम्।

पतियत्याश्रमग्रहणात् पूर्वक्षणे महानसात् गगनमवलम्ब्य ब्रह्मलोकं गच्छन्तीं सरसवाणीं दृष्ट्वा परमगुरुर्वनदुर्गामन्त्रेण दिग्बन्धनमाचकार। तदनन्तरं भोः सरसवाणि ब्रह्मशक्तिरसि, तदंशसम्भूतस्य मण्डनमिश्रस्य पत्नी उपाधिना प्रतिफलसि, तस्मान्मया साकं प्रसङ्गं कृत्वा गन्तुमर्हसि, इति परमगुरुणा उक्ता प्रत्युवाच, पतिसन्न्यासात् पूर्वमेव वैधव्यभयात् पृथिवी मया त्यक्ता, तस्मात्पुनः पृथिवीमहं न स्पृशामि, हे यते त्वन्तु भूस्थः, कथं प्रसङ्गार्थैकविषयस्थितिर्युज्यते, इति। परमगुरुरेवं वदन्तीं प्रत्याह, मातस्तथापि भूम्युपर्याकाशे हस्तषट्कमात्रेणावतिष्ठ, मया सह साङ्गं सर्ववाक्यप्रपञ्चसञ्चारं कृत्वा गच्छसि, इति सादरा भूत्वा तेन सह सर्वशास्त्रेषु वेदेतिहासपुराणेष्वपि समयप्रसङ्गं कृत्वा यतितिरस्काराय दुःप्रवेशकामशास्त्रे नायिकानायक-भेदप्रपञ्चेषु कृतबुद्धिरासीत्। तदानीं यतिवरः तत्कथानभिज्ञ-स्तूष्णीमास॥

इत्यानन्दगिरिकृतौ सरसवाण्या सह यतिप्रसङ्गप्रपञ्चो नाम सप्तपञ्चाशत्प्रकरणम्॥ ५७॥

## अष्टपञ्चाशत्प्रकरणम्।

---

ततः सरसवाणी किल यतिवर्गमित्यब्रवीत्, भवदविदितं शास्त्रवृत्त्यन्तरमस्ति किल तामहं जानामि। कालवित् परमगुरुः प्रत्युवाच,

'मातस्त्वत्रैव षण्मासं तिष्ठ पश्चात् कथासु च।
सति सर्वविभेदासु करोम्यर्थविनिर्णयम्'॥

इत्युक्त्वाऽमात्रायहपूर्वकं भगवतीं तत्रैव गगनमण्डले संस्थाप्य सर्वशिष्यान् यथायतनं प्रेषयित्वा चतुर्भिः शिष्यैः, सह हस्तामलकपद्मपादविधिविदानन्दगिरिप्रवराभिधानैः संसेव्यमानस्तत्पुरादरण्यादुर्गमवतरन् तच्छल्यप्रवचनानां मर्मविभेदं ज्ञात्वा अमृतपुरनामकं चिताङ्गणविशेषं प्राप्य तत्पतौ मृते व्यस्ते तद्देहं चितागतं ज्ञात्वा तत्पुरप्रान्ताद्रिकोटरे निजदेहं संस्थाप्य सर्वदा रक्ष्यतामिति शिष्यानुक्त्वा परकायप्रवेशविद्याप्रपञ्चेन लिङ्गशरीरमात्रेण साभिमानो जीवश्चितिगतनृपकबन्धे अम्बरनिष्ठो ब्रह्मरन्ध्रं प्राविशत्। ततश्चलितपादकरादिकं नृपं समीक्ष्य पौराः सर्वेऽपि प्रफुल्लवदनाश्चितेर्विस्मयप्राप्तजीवं राजानं शैत्योपचारैरनेकैः स्वस्थं कृत्वा चितिनिर्देशापवादपरिहाराय* कुक्कुटादिक्षुद्रजन्तून् तत्र निक्षिप्य वह्निना संयोज्य शान्त्यर्थं बहुगन्धधारा-

---

* मृतापवादपरिहारायेति क्वचित् पाठः।

भिषिक्तं भूपतिमन्मत इति प्रसिद्धं शङ्खभेरीकोलाहलढक्का-तालमर्द्दलादिवाद्यविशेषैर्विप्रपरीतशान्तिपाठकविशेषैः पुरस्त्री-कदम्बकृतनीराजनविशेषैर्हस्त्यश्वरथपदानुगचतुर्विधबलसमवेताः परमाप्तपौराः प्रभुं सिंहासनारूढमाचक्रुः। तत्र स्थित्वा ज्येष्ठ-भार्यागृहं गतः।

तदालिङ्गनसञ्जातसुखभुग्यतिकौशलात्।
मुखं मुखेन संयोज्य वक्षो वक्षोजयोस्तथा॥
नाभ्या नाभिञ्च सङ्कोच्य सङ्कोचेन पदा पदम्।
एवमेकाङ्गवत् कृत्वा गाढालिङ्गनतत्परः॥
कक्षास्थानेषु हस्ताभ्यां स्पृशन् प्रौढ इवाबभौ।
तदालापविशेषज्ञा ज्येष्ठपत्नी कथादिवित्॥
देहमात्रं हि भर्त्तुः स्यात् न जीवोऽयं हि सर्ववित्।
इति ज्ञात्वा बलं दिक्षु प्रेषयामास पूर्वकम्॥
'यत्र कुत्र शरीराणि जीवहीनानि भूमिषु॥
गुप्तानि शिष्यसङ्घैर्वा नदीदेवालयादिषु।
गुहासु भूस्तरां वापि मध्ये द्वादशयोजनात्॥
आलोक्य तानि सर्वाणि चितिं यान्त्विति सादरात्।
अवादीदपि तद्वादादन्वेषणपराभवत्॥

इत्यानन्दगिरिकृतौ देहान्तरसञ्चारविदितकृतकामशास्त्रप्र-पञ्चो नामाष्टपञ्चाशत्प्रकरणम्॥ ५८॥

---

## एकोनषष्टिप्रकरणम् ।

---

नृपस्तदङ्गनासङ्गमहिमापथ्यवर्णनम् ॥
ततः शङ्करगाचश्चाचाराः शिष्योपसेवनात् ।
कृत्वा चितिं काष्ठशतैर्मध्ये स्थाप्य ततस्तनुम् ॥
वह्निं संयोज्य तं कुर्युः शिष्यास्तावत्पुरं गताः ॥
कामलोलुपमेत्याशाबद्धबुद्धिं नृपोत्तमम् ।
आलोक्य नाम्यं कुर्वन्ति बोधयन्तः परोक्तिभिः' ॥
यत्सत्यमुख्यशब्दार्थानुकूलं तत्त्वमसि तत्त्वमसि राजन् ।
न ह्येतत्त्वं विदितं नृपभावम् तत्त्वमसि तत्त्वमसि राजन् ।
विश्वोत्पत्त्यादिविधिहेतुभूतं तत्त्वमसि तत्त्वमसि राजन् ।
सर्वं चिदात्मकं सर्वमद्वैतं तत्त्वमसि तत्त्वमसि राजन् ।
परतार्किकैरीश्वरसर्वहेतुस्तत्त्वमसि तत्त्वमसि राजन् ।
यद्वेदान्तादिभिर्ब्रह्म सर्वस्थं तत्त्वमसि तत्त्वमसि राजन् ।
यज्जैमिनिनोक्तमखिलं कर्म तत्त्वमसि तत्त्वमसि राजन् ।
यत्पाणिनिः प्राह शब्दस्वरूपं तत्त्वमसि तत्त्वमसि राजन् ।
यत् साङ्ख्यानां मतहेतुभूतं तत्त्वमसि तत्त्वमसि राजन् ।
अष्टाङ्गयोगेन अनन्तरूपं तत्त्वमसि तत्त्वमसि राजन् ।
सत्यं ज्ञानमनन्तं ब्रह्म तत्त्वमसि तत्त्वमसि राजन् ।
न ह्येतद् दृश्यप्रपञ्चं तत्त्वमसि तत्त्वमसि राजन् ।
यद्ब्रह्मणो ब्रह्मविष्ण्वीश्वरा ह्यभवन् तत्त्वमसि तत्त्वमसि राजन् ।
त्वद्रूपमेवमस्माभिर्विदितं राजन् तव पूर्वयत्याश्रमस्थम् ॥
इत्यानन्दगिरिकृतौ शिष्यागमनं नाम एकोनषष्टिप्रकरणम् ॥ ५९ ॥

षष्टिप्रकरणम् ।

विप्रोद्बोधितो राजा मूर्छामवलम्ब्य सदसि सर्वेषां देहा-
न्निर्गमितो नीडरूपपचिवत्सलिङ्गकः गिरिकोटरे निजाङ्कं न
प्राप, अग्नेर्मध्यगं वीच्य वह्निज्वालामध्यात् कपालमध्यात्प्रविश्या-
न्मदवस्थाहीनोऽयं लक्ष्मीनृसिंहं तदा प्रस्तौति,

ब्रह्मेन्द्ररुद्रमरुदर्ककिरीटकोटि-
सङ्घट्टिताङ्घ्रिकमलारुणकान्तिकान्त ।
लक्ष्मीलसत्कुचसरोरुहराजहंस-
लक्ष्मीनृसिंह मम देहि करावलम्बम् ।

इत्याद्यष्टश्लोकैः ॥

स्तुतो नृसिंहोऽपि लक्ष्मीसमेतः साक्षाद्बभूव । ज्वालामालासहस्र-
परिवेष्टितां चितिं समीक्ष्य दक्षिणकरावलम्बनमाचार्यस्य दत्वा
उत्थाप्याग्निशिखाक्षतविक्षतिं स्वदृगमृतपूरणेन सम्यग्विधाय
सर्वलोकं जयेत्याशीः कृत्य स्वयं तिरोहितोऽभवत् ॥

इत्यानन्दगिरिकृतौ नृसिंहसाक्षात्कारो नाम षष्टिप्रकर-
णम् ॥ ६० ॥

## एकषष्टिप्रकरणम्।

---

आचार्यस्ततः शिष्यजनसेव्यमानः शीघ्रं मण्डनमिश्रपुरं प्राप्य गगनासनस्थां सरसवाणीं दृष्ट्वा परमतत्त्वरूपिणीं सर्वकलावतीं, मातस्त्वत्कृतरतिशास्त्रप्रश्नानामुत्तरमद्यैव वक्ष्यामि। वाक्यमात्रेणैव सर्वज्ञा सरसवाणी सर्वज्ञस्त्वमिति स्वामिनं प्रस्तुतवत्यासीत्। ततस्त्वाचार्योऽपि विदितसमस्तपदार्थः कृतार्थो बभौ॥

इत्यानन्दगिरिकृतौ सरस्वतीविजयं नाम एकषष्टिप्रकरणम्॥ ६१॥

---

## विपक्षिप्रकरणम् ।

---

ततः परं सरस्ववाणीं मन्त्रबद्धां कृत्वा गगनमार्गादेव शृङ्ग-पुरसमीपे तुङ्गभद्रातीरे चक्रं निर्माय तदग्रे सरस्ववाणीं निधाय एवमाकल्पं स्थिरा भव मदाश्रमे, इत्याज्ञाप्य निजमठं कृत्वा तत्र विद्यापीठनिर्माणं कृत्वा भारतीसम्प्रदायं निजशिष्यं चकार । तदारभ्य शुद्धाद्वैतगुरवो भारतीसम्प्रदायनिष्ठाः परमगुरोरा-चार्यस्वामिनः कटाक्षपरिलब्धविद्या*।१। वैषद्यायेति व्यवहारः ।

यस्त्वद्वैतमते स्थित्वा भारतीमत†।२।निन्दकः ।
स याति नरकं घोरं यावदाभूतसम्प्लवम् ॥

यतिं शङ्कराचार्यगुरुप्रवर्यं
नित्यं स्मरत्युत्तमलोकवासी ।
गुरुरूपज्ञातया हि मुक्तः
सत्यं परं ब्रह्म गुरुर्नचान्यत् ।
नारायणं पद्मभवं वशिष्ठं
शक्तिञ्च तत्पुत्रपराशरञ्च ॥

---

* ।१। विद्या बभूवुरिति क्वचित्पाठः ।

† ।२। भारतीपीठनिन्दकः इति क्वचित्पाठः ।

I.

व्यासं शुकं गौडपदं महान्तं
गोविन्दयोगीन्द्रमथास्य शिष्यम्।
श्रीशङ्कराचार्यमथास्य शिष्यं
पद्मञ्च हस्तामलकञ्च शिष्यम्॥

तत्तोटकं वार्त्तिककारसद्गुरून् सततमानतोस्मि। गुर्वभिमत-शुद्धाद्वैतमतमवलम्ब्य श्रद्धाभक्तिमतवृत्त्या जाग्रदाद्यवस्थात्रयातीतं मनोन्मनमङ्गुष्ठमात्रतनुं ध्यात्वा तद्द्वारा शुद्धं निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनं सत्यं ज्ञानमनन्तं ब्रह्मेतिवाक्यसिद्धं परमात्मानं यो वा वेद सोऽविद्यामुक्तो भवतीति दिक्॥

इत्यानन्दगिरिकृतौ गुरोः सरस्वत्याश्च शृङ्गगिरिस्थान-निवासनं नाम द्विषष्टिप्रकरणम्॥ ६२॥

## त्रिषष्टिप्रकरणम्।

तत्र परमगुरुर्द्वादशाब्दं विद्यापीठे स्थित्वा बहुशिष्येभ्यः शुद्धाद्वैतविद्यायाः सम्यगुपदेशं कृत्वा तदनन्तरं कञ्चिच्छिष्यं सुरेश्वराख्यं पीठाध्यक्षं कृत्वा स्वयं निश्चक्राम। तस्मात् अहोबलाख्यं नृसिंहाविर्भूतस्थलं प्राप्य तत्र नृसिंहं स्तुत्वा तस्मात् वेङ्कटगिरिं प्राप्य वेङ्कटेशमखिलकारणं शुद्धाद्वैतरूपं नत्वा तत्रार्चकादीन् नत्वा अद्वैतवृत्तीन् कृत्वा तस्मात् काञ्चीनगरप्रदेशं प्राविशत्। तत्र किल भगवान् महादेवः स्वकीयपृथिवीमूर्त्याविर्भूतलिङ्गरूपेण किल अम्बरेश इति प्रसिद्धो वर्त्तते। तस्मिन् स्थले मासमात्रं स्थित्वा शङ्करप्रतिष्ठापूर्वकं शिवकाञ्चीतिपत्तनं निर्माय तत्प्राक् ब्रह्मयज्ञकुण्डाविर्भूतविष्णुं वरदराजनामानं समाश्रित्य तत्र विष्णुकाञ्चीतिप्रसिद्धं पट्टणं निर्माय तत्सेवार्थं ब्राह्मणादीन् अनेकभक्तजनान् सम्पाद्य तानपि शुद्धाद्वैतवृत्तिन एव कृत्वा सर्ववेदान्ततात्पर्यैकनिष्ठः परमगुरुः सुखमास। ततस्तद्देशवासिनः सर्वे ताम्रपर्णीतटस्थाः परमगुरुं नत्वेदमूचुः, सर्वदा भिदा सत्यमिव भाति कथमभेदस्य सिद्धत्वमुचितं वक्तुं, भेदस्य भूतभेदस्य प्रतिदेहभेदस्य प्रत्यक्षदृष्टत्वात्, तस्मात् भिदा एव पारमार्थिकी इति ब्रूमः। परलोकेऽपि केषाञ्चित् सुकृतकर्मवशात् स्वर्गप्राप्तिः, केषांचित् दुरितवशात् नरकप्राप्तिः, केषाञ्चित् अर्चिरादिमार्गद्वारा ब्रह्म-

लोकप्राप्तिः, केषांचित् यक्षलोकप्राप्तिः, केषाञ्चित् पाशुपतानां रुद्रलोकप्राप्तिः, सौराणां सूर्यलोकप्राप्तिः, गाणपत्यानां तल्लोकप्राप्तिः, एवमनेकप्राप्तिरिति कृत्वा भेदस्यैव पारमार्थिकत्वं सम्भवतीति पूर्वपक्षे प्राप्ते परमगुरुरेवं पठति, भो द्विजवराः किमु पारमार्थिकमविदितं भवद्भिः, "यत्र त्वस्य सर्वमात्मैवाभूत् केन कं पश्येत् केन कं जिघ्रेत् केन कं विजानीयात्" इति श्रुतिभिः सर्वस्यात्मरूपत्वेन ज्ञानाग्निदग्धपापपञ्जरस्य मर्त्यस्य न भिदा द्योतते तस्य भिदाभावान् मुक्तिरिति समस्तवेदान्तेषु निश्चयतत्त्वं न सन्देहगन्धः। "तत्सृष्ट्वा तदेवानुप्राविशत्" इति शास्त्रतात्पर्येण जगत्कर्त्तुः परब्रह्मण एव जीवरूपेण जगदन्तःप्रवेशावगमात्, किन्त्वत्तदुपासकानां तत्तल्लोकप्राप्तिरिति भवद्भिरुक्तम्। यद्यस्ति जीवभेदस्तदा भविष्यन्ति कति भेदा इत्युपक्रम्य त्रयस्त्रिंशत्सहस्रेतिनिरुच्य के ते इति पृच्छायां "महिमानमेवैषामेव त्रयस्त्रिंशदेव देवा" इति भवति श्रुतिः, एकैकस्य देवतात्मनोऽनेकरूपतां दर्शयति। तथा त्रयस्त्रिंशतीं वितरदन्तरभवक्रमेण क..., एको देव इति प्राण इति, प्राणैकरूपतां देवानां दर्शयति। तस्यैकस्य प्राणस्य युगपदनेकतां दर्शयति। तथा स्मृतिरपि।

"आत्मनाञ्च सहस्राणि बहूनि भरतर्षभ।
योगी कुर्याद् बलं प्राप्य तैश्च सर्वां महीं चरेत्।
प्राप्नुयाद्विषयान् कश्चित्कश्चिदुग्रं तपश्चरेत्॥
संहरेच्च पुनस्तानि सूर्यस्तेजोगणानिव"।

इत्येवञ्जातीयकप्राप्ताणिमाद्यैश्वर्य्यसङ्गयोगिनामपि युगपदनेकशरीरयोगं दर्शयति, किमु वक्तव्यम् आजानसिद्धानां देवानां, अनेकप्रतिपत्तिसम्भवात्। एका सा देवता बहुरूपैरात्मानं प्रविभज्य बहुषु योगेषु युगपदङ्गभावं गच्छति परैश्च न दृश्यते। अन्तर्धानादिशक्तियोगादित्युपपद्यते। विग्रहवत्तामपि कर्माङ्गभावे चोदनास्वनेकप्रतिपत्तिर्दृश्यते। क्वचिदेको विग्रहवाननेकत्र युगपदङ्गभावं न गच्छति। बहुभिर्भोजयद्भिर्नैको ब्राह्मणो युगपद्भोज्यते। क्वचित्तु एकोविग्रहवाननेकत्र युगपदङ्गभावं गच्छति। यथा बहुभिर्नमस्कुर्वाणैरेको ब्राह्मणो नमस्क्रियते। तदिहोद्देशपरित्यागात्मकत्वात् यागस्य विग्रहपतिमेतावदेव तामुद्दिश्य बह्वो युगपत्परोच्य विग्रहवत्त्वेऽपि देवतानां न किञ्चित्कर्मणि विद्यते, तेष्वपि चैतन्यस्यैकरूपत्वात् सर्वस्यापि देवगणस्य ब्रह्मस्वरूपत्वाच्च, "बह्वयां प्राजायेयेतिश्रुतेः। तस्मात् सर्वज्ञं नित्यशुद्धबुद्धस्वरूपं कारणं ब्रह्म मुमुक्षुभिरुपासनीयमिति सिद्धान्तः। तस्माद्भवन्तोऽपि जीवात्मभेदं देवताभेदं सर्वं परित्यज्य शुद्धाद्वैतब्रह्मोपासनया मुक्ता भवथेति सम्यगुपदिष्टाः काञ्चीताम्रपर्णीदेशवासिनः शुद्धाद्वैतविद्याश्रिता बभूवुः॥

इत्यानन्दगिरिकृतौ काञ्चीनगरनिर्माणं नाम त्रिषष्टिप्रकरणम्॥ ६३॥

## चतुःषष्टिप्रकरणम् ।

---

तदनन्तरं कामाक्षीप्रपञ्चश्चिन्त्यते । सा तु साङ्ख्यायनस्य मुनेराविर्भूता किलोपासनया भगवती महद्रूपिणी ब्रह्मविद्या रुद्रशक्तिः । इदानीमपि गुहावासिनी भूत्वा वर्त्तते, निजमहिमाप्रकटार्थमनेकवैभवाननुभवती । तस्याः परमेश्वर्या विम्बप्रतिष्ठामष्टधा कारयामीति विद्याकामाक्षीप्रतिष्ठामाचचार । साप्युपासकानां फलदा कल्पवल्लीव समभवत् । अतो विद्यारूपया तया सहापि युक्तः परमेश्वरो मोचद इति कृत्वा वेदवेदान्तसहस्रसिद्धमतवादः ।

"उमासहायं परमेश्वरं प्रभुं
त्रिलोचनं नीलकण्ठं प्रशान्तम् ।
ध्यात्वा मुनिर्गच्छति भूतयोनिम्" इति श्रुतेः ।

अथर्वकाण्डे । "उमामनन्तं बहुशोभमानाम्" इत्यादिवाक्यानां विद्याफलमाह, उमा 'विद्या' ज्ञानरूपिणीति फलितार्थः । सैव मुक्तिदेति निरवद्यम् ।

"या देवी सर्वभूतेषु *ज्ञानरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमोनमः" ॥

इति मार्कण्डेयपुराणसद्भावाच्च । तस्मात् परा देवता कामाक्षीति तत्प्रपञ्चोऽभवत् ॥

इत्यानन्दगिरिकृतौ कामाक्षीप्रकरणं नाम चतुःषष्टिप्रकरणम् ॥ ६४ ॥

---

* बुद्धिरूपेणेति क्वचित्पाठः ।

## पञ्चषष्टिप्रकरणम् ।

---

एवमेतस्मिन्नर्थे निष्पन्ने परशक्तित्वस्याभिव्यञ्जकं श्रीचक्रनिर्माणं क्रियते भवद्भिराचार्यैः । तत्र श्लोकोऽयम् ।

"बिन्दुत्रिकोणवसुकोणदशारयुग्म-
मन्वस्रनागदलसंयुतषोडशारम् ।
वृत्तत्रयञ्च धरणीसदनत्रयञ्च
श्रीचक्रमेतदुदितं परदेवतायाः" इति ॥

अत्र तु नव चक्राणि वर्ण्यन्ते खलु, तेषां मध्ये केषांञ्चित् शैवत्वं केषाञ्चित् शाक्तत्वं । तथाहि ।

"चतुर्भिः शिवचक्रैश्च शक्तिचक्रैश्च पञ्चभिः ।
नवचक्रैश्च संसिद्धं श्रीचक्रं शिवयोर्वपुः" इति ॥

तत्रापि देवीशिवचक्राविर्भावं दर्शयामि ।

"त्रिकोणमष्टकोणञ्च दशकोणद्वयं तथा ।
चतुर्दशारं चैतानि शक्तिचक्राणि पञ्च च ॥
बिन्दुश्चाष्टदलं पद्मं तथा षोडशपत्रकम् ।
चतुरस्रं चतुर्द्वारं शिवचक्राणि तु क्रमात् ॥
त्रिकोणबैन्दवं श्लिष्टमष्टारेऽष्टदलाम्बुजम् ।

दशारयोः षोडशारं भूगृहं भुवनास्रके ॥
शैवानामपि शाक्तानां चक्राणाञ्च परस्परम् ।
अविनाभावसम्बन्धं यो जानाति स चक्रवित् ॥
त्रिकोणरूपिणी शक्तिर्बिन्दुरूपः सदाशिवः ।
अविनाभावसम्बन्धं तस्माद्बिन्दुत्रिकोणयोः ॥
एवं विभागमज्ञात्वा श्रीचक्रं यः समर्चयेत् ।
न तत्फलमवाप्नोति ललिताम्बा न तुष्यति" ॥

इत्यादिवचनैः श्रीचक्रस्य शिवशक्त्यैक्यरूपत्वात् विद्यात्मैक्यमन्यभेदादवसायसिद्धिः । तस्मात् मुक्तिकाङ्क्षिभिः सर्वैः श्रीचक्रपूजा कर्त्तव्येति दिक् । तस्मात् सर्वेषां मोक्षफलप्राप्तये दर्शनादेव श्रीचक्रं भवद्भिराचार्यैर्निर्म्मितमिति ॥

इत्यानन्दगिरिकृतौ श्रीचक्रनिर्माणं नाम पञ्चषष्टिप्रकरणम् ॥ ६५ ॥

## षट्षष्टिप्रकरणम्।

---

कदाचित् शिष्या अनन्तानन्दगिरिमुखा नत्वेदमूचुः, स्वामिन् मोक्षस्य मार्गलक्षणं वद। स तु परमगुरुः शिष्यैः प्रार्थितो मोक्षमार्गलक्षणं वक्तुमुपक्रममाचकार॥ भगवद्गीतासु।

"अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः"॥

इत्यग्न्यादिमार्गोऽयमर्चिरादिमार्ग इत्युच्यते। एतस्मिन्नर्थे भवद्भिराचार्यैः सूत्रभाष्ये सम्यक् प्रतिपादितम्। सूत्रेष्वर्चिरादिषु संशयः। अथवा नेतारो गन्तॄणामिति, तत्र मार्गलक्षणभूताः अर्चिरादय इति पूर्वपक्षः। अर्चिरादयश्चेतना इति सिद्धान्तः। तथा हि। "चन्द्रमसो विद्युदन्तः पुरुषः सराणान् ब्रह्म गमयति" इति सिद्धवद्गमयितृत्वं दर्शयति। तस्य स्वस्थानमागतस्य मुक्तजीवस्य लिङ्गं प्रथममग्निर्दहति तथा सोऽग्न्याकारो भवतीति तदुपरि निरञ्जनं ज्योतिः प्राप्य स्वयमपि ज्योतिःस्वरूपो भवति। अज्ञानस्वरूपाया रात्रेस्तत्राभावात्॥ ततः शुक्लं प्राप्य स्वयञ्च शुक्लो भवति, "यच्छुक्लं तत् ब्रह्म" इत्यादिना तदेव

ब्रह्मप्राप्तिरिति शुक्लगतस्य पुनरावृत्त्यभावात्। इत्यानन्द अनु-भूत्वा विहरति केचिदेवं वदन्ति। अर्चिरादिमार्गेण कार्य-ब्रह्मस्थानं प्राप्य तदन्तपर्यन्तं तदग्रे स्थित्वा तेन सह मुक्ताः ब्रह्म सत्यज्ञानानन्तलक्षणं प्राप्नुवन्तीति तन्मतमनर्हम्। सूक्ष्म-शरीरनाशानन्तरं स्थित्यभावात्, सर्वगतं ब्रह्मैव स्वयम्भवतीति सिद्धान्तः॥

"धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायणम्।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्त्तते"॥

इति भेदफलं पुनरावृत्तिरेव, तस्य सर्वदाप्यसत्वात्। तथाहि। इदमस्माद्भिन्नमिति प्रतीयमानो भेदो धर्मिस्वरूपं वा स्यात् तथा धर्मो वा, न तावद्धर्मिस्वरूपमात्रं भेदः। इदमस्माद्भिन्नम्, घटः पटो न, इत्यादौ प्रकारतया भासमानस्य धर्मिस्वरूपत्वा-नुपपत्तेः। अयं घटः, घटः पटाद्भिन्न इतिप्रतीत्योरविशेषप्रस-ङ्गात्, विषयवैचित्र्यव्यतिरेकेण प्रतीतिवैचित्र्यस्य वक्तुमशक्यत्वात्। अन्यथासिद्धेत्यादेर्योग्यायोग्यघटितत्वेनाप्रत्यक्षत्वप्रसङ्गात्। क-चिदपि प्रत्यक्षानङ्गीकारे अनुमानस्याप्रवृत्तेः। एवञ्च एक एव दण्डः कदाचिद्दण्डत्वेन भासते, दण्डवति कदाचिदन्वयादिसा-चिव्ये सति दण्डो घटकारणमिति तत्र दण्ड इति प्रतीतेः, न प्रतियोगिध्वंसापेक्षत्वम्, अन्वयाद्यपेक्षत्वं वा, दृष्टानुसारित्वात् कल्पनायाः, विषयभेदाभावेऽपि प्रतीतिवैचित्र्यस्याङ्गीकृतम्।

प्रतियोग्यनुयोगिविशेषणविशेष्याधाराधेयावच्छेद्यावच्छेदकभावादयोऽपि धर्मिस्वरूपा एव विलक्षणप्रतीतिनियामका इत्यङ्गीकृतम्। तथाचापि भेदस्य धर्मिस्वरूपत्वेऽपि विलक्षणप्रतीतिनियामकत्वं सप्रतियोगिकत्वं न विरुद्धमिति अत्रोच्यते। कारणत्वादयोऽपि विचारणीयास्तेषामपि स्वरूपत्वेऽपि कथं विलक्षणप्रतीतिनियामकत्वं न ह्येकमेव वस्तु सप्रतियोगिकं निष्प्रतियोगिकञ्च सम्भवति विरोधात्। घटप्रतीतौ कारणत्वादिसन्देहो न स्यात् अज्ञातांशलेशाभावात्। न च समानप्रकारकनिश्चयस्य समानप्रकारकसंशयविरोधितया घट इति निश्चयात् घटो न वेति सन्देहो माभूत्। घटकारणं न वेति कारणत्वप्रकारकसंशये तु न बाधकं भिन्नप्रकारकत्वादिति वाच्यं घटत्वस्यैव कारणत्वस्य घटधर्मत्वानङ्गीकारात्। घटस्य घटत्वापेक्षया भिन्नत्वात् धर्मिस्वरूपज्ञानेऽपि दोषवशात् घटत्वाज्ञाने घटो न वेति संशयः सम्भवति। कारणत्वन्तु घटस्वरूपमेवेति कथं घटज्ञानेऽपि कारणत्वसंशयः, न च घट इति ज्ञाने घटस्याविशेषणत्वेन तत्स्वरूपस्यापि कारणत्वस्याप्रकारत्वात् तत्प्रकारकसंशयदुर्भिक्षमिति वाच्यम् घटे घटत्वमिति घटज्ञाने सति कारणत्वसंशयो न स्यात् उक्तज्ञाने घटस्य प्रकारतया तत्स्वरूपस्य कारणताया अपि प्रकारत्वात्, न च घटस्य घटत्वेन रूपेण प्रकारत्वेऽपि कारणत्वेन रूपेण न प्रकारत्वमिति वाच्यम्। घटस्वरूपातिरिक्तकारणत्वानङ्गीकारात्। तस्मात् धर्मिस्वरूपभेदो

न चोद्यम:। न द्वितीय:। सधर्म: किं भावरूपोऽभावरूपो वा, भावरूपत्वे पृथक्त्वं विभागो वा द्वयमपि न सम्भवति। गुणादेर्भेदाभावप्रसङ्गात्। विभागपक्षे संयुक्तयोर्भेदो न स्यात्। पृथक्त्वस्य प्रतीतिबलात् गुणादिवृत्तित्वाङ्गीकारे पृथक्त्वस्य भेदो न स्यात् पृथक्त्वे पृथक्त्वानङ्गीकारात्। अन्योन्याभावेनैव पृथक्त्वव्यवहारोपपत्तौ अतिरिक्तपृथक्त्वानङ्गीकाराच्च। न चान्याराद्दितरेत्यादिसूत्रे अन्यशब्दस्यार्थपरत्वेन इदमस्माद्भिन्नमितिवत् इदमस्मात् पृथगित्यपि प्रयोगादिति वाच्यम् विभक्त्यनुशासनस्य शब्दविशेषाधीनत्वस्य सर्वसम्प्रतिपत्ते:। अन्यथा घटात् प्रमेयमित्यपि प्रयोगापत्ते: प्रमेयशब्दार्थानामपि पृथक्त्वार्थकत्वात्। न चासाधारणेन पृथक्त्वार्थकत्वमभिहितमिति वाच्यम्। कथञ्चिदर्थविवक्षायामतिप्रसङ्गभयेनार्थविशेषविवक्षायां नभिन्नत्वेनापि शब्दविशेषणत्वे बाधकाभावात् तस्यान्योन्यात्यन्ताभावसाधारणार्थकत्वेनासाधारणेन तदर्थकत्वाभावाच्च। किञ्चिदिष्टप्रसङ्गग्रहार्थमर्थपरत्वव्याख्यानस्याभिमतत्वे सङ्ग्राहकत्वाच्च। अत एव व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्, अभिधानलक्षणा: कृत्तद्धिता इत्यादि वैयाकरणादीनां प्रयोगशरणत्वाद् बोध्यम्, तस्माद्विभाग: पृथक्त्वं वा न भेद:। अभावोऽपि किमन्योन्याभाव:, अत्यन्ताभावो वा। नाद्य:, प्रतियोग्यनिरूपणात्, न किं घटादिकमेव प्रतियोगीति शक्यं वक्तुम्। घटो नास्ति, घटो न भवतीत्युभयत्रापि घटस्यैव प्रतियोगित्वे अत्यन्तान्योन्याभावयो-

भेदो, न स्यात्, उभयत्रापि घटस्यैवावच्छेदकत्वेनावच्छेदकभेदस्याप्यभावाच्च। न च तद्भेदाभावेऽपि क्वचित्तादात्म्यारोपः क्वचित्संसर्गारोप इति सम्बन्धभेदाद्भेद इति वाच्यम्। भूतले घटो नास्ति, भूतलं घटवन्न भवति इत्यत्र उभयत्रापि संसर्गस्यैवारोप्यत्वेन भेदानापत्तेः। न चैकत्र संसर्गः संसर्गत्वे नारोप्यत इतरत्र तादात्म्यत्वेनेति भेद इति वाच्यम्। संसर्गत्वतादात्म्यत्वयोर्भेदस्य वक्तुमशक्यत्वात् न ह्यतो भेदः पारमार्थिक इत्युक्ताः शिष्याः पुनरूचुः, स्वामिन्,

"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति" ॥
"अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम्।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" ॥

इत्यत्र च जीवप्रभेदस्य निश्चयात्, कथम् अभेदः सिद्धान्त इति वक्तुमुचितम्। तस्माद्भेद एवाङ्गीकर्त्तव्य इति प्राप्ते, परमगुरुभिरेवमुच्यते, नेदं श्रुतिवाक्यद्वयं जीवपरभेदसमर्पणपरम्, किन्तु बुद्धिक्षेत्रज्ञसम्भिदार्पणपरम्। तयोरेकस्थानाश्रितत्वात् बुद्धिकोशे क्षेत्रज्ञस्य प्रतिफलनं जीव इति प्रसिद्धा जीवक्षेत्रज्ञयोः सर्वदाऽभेद एव। सजलघटेषु सूर्यबिम्बप्रतिफलनमिव, दर्पणान्तःप्रतिबिम्बितमुखमिव, भिदागन्धलेशरहिते जीवशब्दवाच्ये क्षेत्रज्ञे, दर्पणमालिन्यान्मुखमालिन्यमिव, दर्पणान्तःप्रति-

विम्बिते जलमालिन्यात् दिनकरविम्बमालिन्यमिव कर्मफलान्यनुभवत: चेत्रज्ञस्य प्रतिविम्बितस्य भिदा कल्पनीया तेन बक्रबुद्धिकोशे प्रतिफलनेन चेत्रज्ञवाङ्क्यमुचितं वक्तुम्। घटदर्पणवाङ्क्येऽपि सूर्यमुखयोरेकत्वं, यथा, तद्वदभेद एव सिद्धान्त:। "तत्सृष्ट्वा तदेवानुप्राविशदित्यादिना" प्रविष्टस्य ब्रह्मण एव चेत्रज्ञत्वात्, साची नित्य: चेत्रज्ञ: परमात्मा सद्ब्रह्मात्मेति ब्रह्मणि पर्यायशब्दा:,

"चेत्रज्ञञ्चापि मां विद्धि सर्वचेत्रेषु भारत"।

इति भगवद्वचनाच्च। तस्माद्द्वैतमेव सिद्धान्त:। द्वैतन्तु मायाकल्पितं मोहकारणम् जन्ममरणप्रवाहागाधजलप्रायमिति सिद्धान्तो व्याससमतसिद्ध:। इष्टापूर्त्तादिकर्मशीलाश्चन्द्रमसं धूममार्गद्वारा प्रविशन्ति, प्रथमं धूमस्थाने मेघोपरितनप्रदेशे धूमायिता:। तदुपरि रात्रिं प्राप्य तदुपरि कृष्णवर्णा भूत्वा चन्द्रं प्राप्नुवन्ति। तत्रापि कृष्णवर्णत्वाद्देवोपभोग्ययोग्ये चन्द्रमसि स्थितास्ते देवा आत्मतां प्राप्नुवन्ति, किंवा मण्डलैकदेशे किलेष्टादिकारणे वसन्तीति यद्युच्येत, तत्रेदमुच्यते, प्रथमां पिबेद्वह्निरित्यादिना देवानां चन्द्रचन्द्रिकापानमात्रमेव, न तु कृष्णवर्णचन्द्रविम्बानुभव:। अतोहेतोस्तत्र इष्टादिकारणमपि कृष्णवर्णत्वेन देवोपभोग्यत्वं न सम्भवति। मण्डलाश्रयत्वमात्रमेव तेषां तत्रानुभवस्तु देववदमृतपानं स्वं न सम्भवति, किन्तु परं चन्द्रविम्बरूपममृतं दृष्ट्वा नित्यतृप्ता इव वर्त्तन्ते, यावत् पुण्यपापं, किञ्चिदवशिष्टपुण्ये तत्र स्थातुमसमर्था:, पक्वफलगणा इव च्युता:

पञ्चाग्निविद्यामवलम्ब्य पञ्चम्यामाहुताः पुनः पुरुषाकारतां प्राप्य नित्यसंसारिण इव वर्त्तन्ते । तदन्ये तु यममार्गमवलम्ब्य स्वानि कर्माणि सेवन्ते सप्तविधनरकेषु पच्यन्ते । यावत् कर्मफलं तावद्यूयं स्थूलशरीरस्य लयं सूक्ष्मे सम्यग्विधाय सूक्ष्मस्य च कारणे मनोमात्रान्तर्लीनं कृत्वा, मनसोऽपि विश्वकारणे अङ्गुष्ठमात्रपुरुषे विलापं सम्पाद्य तदुपर्य्यभिन्नब्रह्म भूत्वा मुक्ता भवथेत्युक्ताः शिष्याः परमगुरुपादकमलद्वयसक्ताः शिष्याः कृतार्थाः विदितब्रह्माणो जीवन्मुक्ता बभूवुः ॥

इत्यानन्दगिरिकृतौ मोक्षमार्गप्रकाशो नाम षट्षष्टिप्रकरणम् ॥ ६६ ॥

## सप्तषष्टिप्रकरणम्।

---

तदनन्तरं सकललोकसाक्षी चैतन्यानुभवविदितभूतभविष्य-द्वर्त्तमानकालः परमगुरुः स्वतन्त्रपुरुषः शुद्धाद्वैतविद्यानिष्ठान् गरिष्ठान् सेतुहिमाचलमध्यदेशस्थाननिवेशान् ब्राह्मणादीन् कृत्वा तदीयविरोधाङ्गीकारसमर्थां निजशिष्यपरम्परां आकल्पं शृङ्ग-गिरिस्थानस्थां कृत्वा सकलशिष्येभ्यो मोक्षमार्गोपदेशं कृत्वा कलावस्मिन् युगे नानापापपरिध्वस्तज्ञानाङ्कुरेषु मर्त्येषु शुद्धा-द्वैतविद्यायामनधिकारिषु तेषां वृत्तिः पुनरपि यथेप्सिता भव-तीति सम्यग्विचार्य लोकरक्षार्थं वर्णाश्रमपरिपालनार्थं पर-मतकल्पनां जीवेशभेदास्पदाञ्च रचयितुमुपक्रम्य निजशिष्यं परमतकालानलं दृष्ट्वेदमाह, भोः शिष्य तव यत् प्रीतिस्तत्स-मासतो भाविकाम्योचितवशात् तत्करोमि तव मत इति उक्तः परमतकालानलः परमगुरुचरणारविन्दयुगलमुत्तमाङ्गेन धृत्वा सर्वापराधं क्षमस्वेति कपोलताडनपुरःसरं तिष्ठन् प्राञ्जलि-रिदमब्रवीत्, भोः स्वामिन् परमगुरो प्रत्यक्षशिवे शिवेति जग-त्कारणे चिरान्मम मतिरवलग्ना। तथाहि। यदस्ति प्रपञ्च-कारणं नित्यशुद्धबुद्धमुक्तस्वरूपमखिलमयं ब्रह्म सत्यं ज्ञानम-नन्तं तत् तदेव इति बुद्धिमिद्धं कृत्वा ध्वस्तसंशयोऽस्मि। अतः शिव

एव परिपूर्णं जगदुपादानकारणमिति निश्चयेन सर्व्वमपीदं परिदृश्यमानं जगत् शिवादनन्यत्वस्याधारत्वात् तदीयतेजःकारणसञ्जातब्रह्मविष्णुरुद्रान् सृष्ट्यादिजगदवस्थानिमित्तान् तत्तेजःसम्भूतदिगधोशादिकान् वियद्गानश्विन्यादितारावलीकृतकालचक्रमेतदन्तःसन्ततस्थगितभूम्यब्धिद्वीपगिरिप्रमुखमखिलं शिवांशमिति बहुधा युक्तियुक्तं विचार्य्य निरुपाधिकः परमेश्वर एव सदुपदेशबलात् आत्मा स एवाहमिति समाधानमनसा वर्त्तमानस्यापि मतिरिदं निश्चिनोति। वह्निकाष्ठसंयोगजातविस्फुलिङ्गा इव परमशिवाज्जातमखिलं जगदेव मनुष्यतिर्य्यग्जीवव्याप्तम् इति, तस्मादीशोऽस्ति किल। यदंशा जीवा इत्युक्त्या परमेश्वरः सर्वैरुपासनीयः। ततोऽस्मदभीष्टः शिवः,

"शिवध्यानपरा ये तु शिवभक्तावतन्द्रिताः।
लोकं यान्ति शिवास्यैव सर्व्वदेवनमस्कृताः" ॥

इति भारतवचनात् शिवस्योपासनमत्यन्तपुण्यवर्द्धनं भोगमोक्षास्पदं ब्रह्मचर्य्यादिभिः। अत इदमेव सदाङ्गीकरणीयमिति सम्यग्विज्ञापितः परमगुरुः, एवमेको मार्गोऽस्तु ब्रह्मविदुषामद्वैतमार्गममार्गेश्वाणामसमर्थानामिति प्राप्ते, कलियुगे यूयमेतद्देवतानिरता भवथ, इत्येकेभ्यो मुनिभ्यो दत्तं यतिशापञ्च प्राप्तशापमिव विचार्य्य दिग्विजयाधिकारिणं निजशिष्यं ज्ञात्वा बहुकालं शैवमतं शापान्तरमद्वैतान्वितं लोकोपकाररूपं कल्पयित्वा तमवादीत्, स पुनः परमगुरुं प्रणम्य षड्विधभेदात्मकं शैवमतं

चापि रचयित्वा सेतुहिमाचलमध्यदेशवासिनो ब्राह्मणादीन् तन्मतावलम्बिनः कर्त्तुं प्रतिपक्षक्षयार्थंञ्च दिग्विजयमारभमाणः परमतकालानलः काशीनगरप्रागादिदिङ्मार्गप्रक्रमणेन परमगुर्वनुज्ञया वासमारभमाणो भगवतः शङ्करस्य त्रिशूलांशः परमतकालानल. सन्यस्तकर्म्मापि धृतैकदण्डः शूलहस्तमण्डलाङ्कतडमरुगः पश्यतामाविर्भूतशङ्कर इव समवर्त्तत।

'जनाः केचिदथाद्वैतं गहनं शङ्करोदितम्।
गुरुणा तेन सम्प्रोक्तं शैवं रुचिकरं हि नः॥
शिचिता गुरुणा तेन वयं कैलाशभागिनः।
भवाम इति तच्छिष्या बभूवुः शैवमार्गगाः॥

एवमशेषदिग्विजयं कृत्वा तत्तद्देशस्थान् कांश्चित् पञ्चाक्षरमहामन्त्रराजोपदेशादिना तारयतिस्म परमतकालानलः शङ्कराचार्य्यशिष्यः॥

इत्यानन्दगिरिकृतौ शैवमतस्थापनं नाम सप्तषष्टिप्रकरणम्।
॥ ६७ ॥

## अष्टषष्टिप्रकरणम्।

---

ततः परमगुरुस्त्रैगुण्यान् कलियुगमनुजान् दृष्ट्वा शैवानन्तरं वैष्णवमतञ्च कल्पनीयमिति, विचार्य तत्सुवन्धशेषवायुसत्यजातौ लक्ष्मणहस्तामलकौ स्वान्तरङ्गशिष्यौ, युवयोरुभयं वदतामिति। तौ परमगुरुचरणारविन्दयुगलं सङ्गत्या उत्तमाङ्गेन नत्वा कृताञ्जली इदमूचतुः, स्वामिन् भवदुपदेशात् अचिन्त्यमव्यक्तमनन्तरूपं सत्यं ज्ञानमनन्तं ब्रह्म सर्वकारणं तदेवाहमिति ज्ञानसिद्धावपि मदीयं चेतः सर्वदा श्रीनारायणचरणाजथ्याप्रमिव वर्त्तते, स एव ब्रह्मेति सहस्रप्रमाणसम्भूतः सिद्धान्तोऽस्मदीयः। एवं शिष्यवरवचनं निशम्य पुनरवादीत् परमगुरुः, समीचीनम्, लक्ष्मण, हस्तामलक, युवां ब्रह्मचारिणौ, किल मतकल्पनाय स्वीकुरुतम्, इति तावत्यन्तसन्तोषचित्तौ तदानीमेव परमगुरूपदेशवशात् सन्न्यासिनौ भवतः स्म। ताभ्यां वन्दितपादः परमगुरुर्दयाम्बुधिरिदमाह, विष्णुमतं षड्विधभेदविराजितं सकलमनुजमोहकरं द्विपञ्चमुद्रालिङ्गनारायणाष्टाक्षरमन्त्रोपदेशमूलं दृष्टिसृष्टिदोषवर्जितं कल्पयतम्, एवं षड्विधं कर्मविभेदेन वैष्णवमतं कृत्वा दिग्विजयं कुरुतम्, पुनरा-

गतयोर्भवतोः सत्यमिव सङ्कविष्यतीति। एवमाज्ञप्तौ मतकारण-लादाचार्यौ लक्ष्मणहस्तामलकौ काञ्चीनगरक्रमात् पूर्वापराशाद्वयमवलम्ब्य परमगुरुमनुदिनं स्मरन्तौ दिग्विजयं चक्राते। स हि पूर्वभागे लक्ष्मणाचार्यः किल दिग्विजयं कृत्वा कांश्चिद्ब्राह्मणादीन् सच्छिद्रोर्द्ध्वपुण्ड्रधारणशङ्खचक्राङ्कभास्वरभुजयुगलान् कृत्वा बहुशिष्यसमेतः पुनरावृत्त्य परमगुरुचरणं नत्वा तदनुज्ञावशात् मतविजृम्भणहेतुकं भाष्यादिग्रन्थचयमकरोत्। हस्तामलकस्तु भूमध्यात्पश्चिमखण्डदिग्विजयं कृत्वा पञ्चमुद्राङ्कविराजितान् भगवदष्टाक्षरमन्त्रजपासक्तान् कांश्चिद्ब्राह्मणादीन् कृत्वा रजतपीठादिस्थलेषु कृष्णादिदेवप्रतिमां कृत्वा मतं विज्ञापयितुम् पुनः परमगुरुं प्राप। दृष्ट्वा तदानीं काञ्च्यां परमगुरुं शङ्कराचार्यं नत्वा तत्पादयुगले स्वकृतं विज्ञापयामास॥

इत्यानन्दगिरिकृतौ वैष्णवमतस्थापनं नामाष्टषष्टिप्रकरणम्॥ ६८॥

## एकोनसप्ततिप्रकरणम्।

ततः परं सूर्यशक्तिगणपतिशिवनारायणानां ब्राह्मणोपासनयोग्यदेवतानां समभ्युपासनया मुक्तेः सिद्धत्वात् तत्रानधिकारिभिर्व्यभ्युपासनञ्च कर्त्तव्यमिति कृत्वा शिवकेशवमतद्वयं प्रतिपादितम्। तदानीं सूर्याष्टाचरीमूलसौरमतं षड्विधभेदविजृम्भितं स्थापयितुं श्रीपरमगुरुर्निजशिष्यं सर्वविद्याप्रवीणं दिवाकरनामानं वीच्येदमाह, भो दिवाकर त्वं ब्रह्मचर्याश्रमव्रतं समाप्य परिव्राट् भव, सौरमतं रचयितुमिदानीं चन्तिनकान्तोऽयमागत इति तद्वाक्यं शिरसा परिगृह्य दिवाकरस्तदानीमेव परमगुरूपदेशबलाद्धृतपरमहंसाश्रमः सौरमतदर्शनलक्षणं गुरुमुखात् श्रुत्वा तदनुज्ञावशात् सेतुहिमाचलपर्यन्तं दिग्विजयमारभमाणः काञ्चीनगरात् प्रागादिप्रदक्षिणमार्गेण अवलम्ब्य किञ्चिद्दूरं गत्वा. तत्र कांश्चिद्विप्रान् सौरमतप्रचारकानाचकार। एवमशेषदेशसञ्चारं कृत्वा तत्तद्विषयेषु सौरमतमुज्जृम्भयन् पुनः काञ्चीनगरं प्राप, परमगुरुं नत्वेदमाह, स्वामिन्, तव कृपया सर्वदेशेषु सौरमतस्थापनं विधाय तत्प्रतिपक्षान् युक्तिभिर्जित्वा भवद्दर्शनायागतोऽस्मि। इति परमगुरुस्तुष्टान्तरोऽङ्गसमीचीनं भवता कृतमिति तमवादीत्॥

इत्यानन्दगिरिकृतौ सौरमतस्थापनं नाम एकोनसप्ततिप्रकरणं॥६९॥

## सप्ततिप्रकरणम्।

---

ततः परमगुरुः शक्तिमतं रचयितुं निजशिष्यवरं त्रिपुरकुमारं विलोक्येदमब्रवीत्। भोः शिष्य भवतः कुत्र मते विश्वासस्तद्वद, इत्युक्तः त्रिपुरकुमारः प्रणम्येदमब्रवीत्, स्वामिन् परमगुरो, भवदुपदेशेन भगवानात्मा सर्वकारणम्, स एवाहमिति निश्चलज्ञानवतोऽपि ममान्तःकरणविमर्शस्य विश्वकारणं भगवती, तत्र भगवतो निमित्तकारणत्वमात्रमेव दृश्यते। ततः प्रकृतिरेव शिवः, बहिरावरणशक्तिरखिलकारणमस्मदादिपरिदृश्यमानजगति तथा दर्शनात्, शक्त्यभावे पुरुषस्याकिञ्चित्करत्वमेव सम्भवति। अतश्च सोपाधिक एव भगवान् जगत्कारणं कर्त्ता। भवन्मतेऽपि निरुपाधिकचैतन्यं जगत्कारणत्वमम्। तस्मात् प्रकृत्यभावे ईश्वरस्याप्यभावो वक्तुमुचित इव प्रतिफलति। किञ्च उभयमपि जगत्कारणं वेदितव्यम्, ईश्वराभावे प्रकृत्यभावे च लोकसृष्टिर्न स्यात्। पितृमातृभ्यामिव मनुष्यः, तत्रापि पित्रपेक्षया शिशुधारणनिर्गमनप्रयासस्य मातृनिष्ठत्वात् प्रथमं प्रकृतिर्जगदुपादानकारणं, पुरुषः पश्चात्, इति सिद्धान्तः मदधिकारः, एवं भवत्कृपाबलात्प्रतिलब्धम् इति सम्यग्विज्ञापितः

परमगुरुः शिष्यवरं पुनः प्राह, मतं भवदाशयरूपं कल्पयितुं सन्न्यासमद्यैव स्वीकुरुष्व, इति तदाज्ञां शिरसा परिगृह्य तदुपदेशवशात् सन्न्यासं पारमहंस्याख्यं प्राप्य दण्डकमण्डलुभ्यां विराजितकरः कषायवस्त्रशोभिततनुः शिष्यवरस्त्रिपुरकुमारः परमगुरुचरणकमलयुगलमत्यन्तभक्त्या मुहुर्मुहुः प्रणम्य दिग्विजयार्थं काञ्चीनगरात्प्रागाद्याशामवलम्ब्याविर्भूतस्त्रिपुर इव परमगुर्वनुज्ञया ययौ। सेतुहिमाचलमध्यभूमिस्थप्रौढविद्वज्जनान्निजशक्तिदर्शनात् जित्वा कांश्चिच्छक्तान् स्वदर्शनाशक्तान् श्रीविद्यानिरतान् कृतार्थान् कृत्वा आशु काञ्चीनगरस्थं गुरुमभिवाद्य स्वकृतमशेषं प्रयोजनं विज्ञाप्य शैववैष्णवसौरमताध्यक्षयतिस्थानगोऽभवत्॥

इत्यानन्दगिरिकृतौ शक्तिमतस्थापनं नाम सप्ततिप्रकरणम्॥ ७०॥

---

## एकसप्ततिप्रकरणम् ।

---

एवं स्थापितेषु शैववैष्णवसौरशाक्तेषु, गिरिराजकुमार इति प्रसिद्धः सर्वशास्त्रपारं गतः समागत्य परमगुरुचरणारविन्दयुगलं नत्वा विनयादेवमाह, स्वामिन् ब्रह्मादिगणानां पतिर्गणपतिः सर्वलोककर्त्ता, अहमेक एव गणपतिः, 'गणानां त्वा गणपतिं हवामहे' इति श्रुतिः। किञ्च तस्य सर्वदेव पूज्यत्वं वर्त्तते। त्रिपुरसंहारकाले महादेवेन पूजितः। रावणासुरसंहरणार्थं समुद्रमध्ये सेतुरचनाकाले रामेण पूजितः। क्षीराब्धिमथनकाले देवासुरैः पूजितः। सृष्ट्यादौ ब्रह्मणा पूजितः। एवं शिवकेशवब्रह्मादिभिरुपास्यः परमपुरुषः किल महागणपतिः, तस्य निर्गुणत्वं सगुणत्वञ्च सिद्धमेव। महदादितत्त्वकारणं निर्गुणम्, व्योमादिभूतकारणं सगुणमेव। सकललोकव्यापकचैतन्यस्य गणपतेर्विष्णुनाम, बृहत्त्वाद्ब्रह्म नाम, स्वच्छवर्णसाम्यात्ययकर्तृत्वाच्च रुद्रनाम नासिद्धं भवति। एवञ्चाकारत्रयेण सृष्ट्यादि स एव करोतीति दिक्।

'शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम्।
प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये' ॥

इति तस्य कर्मादिपूज्यत्वस्य सिद्धत्वात् सर्वविद्यामयत्वाच्च तस्मिन् ज्ञाते सर्वमिदं विज्ञातं भवतीति नित्यशुद्धबुद्धमुक्तस्वरूपं ब्रह्म,

गणपतिः एक एव आसीत्, तस्मादस्मन्मतमत्यन्तश्रेष्ठतरमिति ज्ञात्वा तदेव सर्वैरङ्गीकर्त्तव्यमिति विज्ञापितम्। इतः परं सर्वज्ञै-र्भवद्भिः परमगुरुभिर्यथाज्ञापितं तदेव करोमीति ब्रुवन्तं गिरिराजपुत्रं शिष्यवरं वीक्ष्य भगवान् परमगुरुरिदमब्रवीत्, शिष्य, गणपतावास्तिक्यबुद्धिरस्ति चेन्मतं रचय, तदर्थं सन्न्यासी भव, एवमुक्तः शिष्यो गुरूपदेशवशात् परमहंसाश्रमी भूत्वा दिग्विजयार्थं काञ्चीनगरात् प्राङ्मार्गमनुसृत्य सेतुहिमाचल-मध्यभूमिषु स्वमतं प्रकाशयित्वा बहुगाणपत्यशिष्यसमेतः पुनः परमगुरुं नत्वा शिष्यस्थानमाप ॥

इत्यानन्दगिरिकृतौ गाणपत्यमतस्थापनं नाम एकसप्तति-प्रकरणम् ॥ ७१ ॥

---

## द्विसप्ततिप्रकरणम् ।

एवं ब्राह्मणोपासनं पञ्चसु मतेषु स्थापितेषु कापालिको वटुकनाथ इति प्रसिद्धः समागत्य परमगुरुं बहुधा नत्वा विनयात् कृताञ्जलिरिदमाह, स्वामिन् मम मतेन समरेषु मतभेदं कृत्वा शुद्धाद्वैतवृत्तिं हिमवत्सेतुमध्यभूमिषु आपूर्य सर्वानपि ब्राह्मणादीन् अद्वैतदर्शनपरान् कृत्वा मर्त्यलोकेऽस्मिन् शुद्धाद्वैतवृत्त्याश्रितशैवादिपञ्चमतस्थापनप्रदोऽसि, मन्मतख्यातिविवित्सावकाशं चिन्तय, सर्वमतगुरुर्गतिस्त्वमिति दण्डवत् प्रणम्य कृताञ्जलिपुटं वटुकनाथमालोक्य परमगुरुर्भगवानिदमाह, भोः शिष्य, देवसिद्धानां तेषां शैववैष्णवसौरशाक्तगाणपत्यानां पूर्वपक्षवृत्त्या भवन्मतं रचय, तदभावे तेषां सिद्धान्तता न घटते, इति उपदिष्टः, स तु शिष्यो वटुकनाथः तथा करोमि, इति पुनरपि गुरुपादारविन्दयुगलं नत्वा काञ्चीनगरात्प्रागादिदिङ्मार्गमवलम्ब्य सेतुहिमाचलमध्यभूमिषु तत्र तत्र कांश्चिद्ब्राह्मणादीन् भैरवमतप्रवर्त्तकान् कृत्वा पुनः शीघ्रमागत्य परमगुरुं नत्वा स्वामिन् भवत्कृपया रहस्यादिधर्माश्रितं कापालिकमतं मया केषुचिद्भक्तेषु प्रतिदेशे विजृम्भितमिति विज्ञाप्य मुख्यशिष्योऽहञ्च, इति समीपे तद्दासवत् समवर्त्तत ॥

इत्यानन्दगिरिकृतौ कापालिकमतस्थापनं नाम द्विसप्ततिप्रकरणम् ॥ ७२ ॥

## विमतप्रतिप्रकरणम् ।

तदानीं हि सर्वे शिष्या गुरुस्तुतिमेवमाचरन्, तावत्पद्म-
पाद एवमब्रवीत्,

'अद्वैतार्णवपूर्वदिग्भवनिभुं विद्याप्रदं प्राणिनां,
खिद्यद्वागमृताशनं कृतधियां सन्देहशङ्कापहम् ।
विद्वद्वैरिजनोक्तिपङ्क्तिमखिलाकल्योक्तिसत्कोद्गमे-,
माधुर्यामृतपानदृप्तमनिशं नौमि प्रसिद्धं गुरुम्' ॥

'यत्पादपङ्कजध्यानाल्लक्ष्मणाद्या मतेश्वराः ।
बभूवुस्तादृशं वन्दे शङ्करं षण्मतेश्वरम्' ॥

शङ्कराचार्यकल्पतरुः शुद्धाद्वैतमूलः । षण्मतशाखो ज्ञानफलः सन्ततं लोके विराजति । ततः परमतकालानलादयो यतयः इदमूचुः,

'यः कर्त्ता ब्रह्मविद्याया ब्रह्मवाद इति श्रुतेः ।
आसीद्गुरुः स एवाद्य अस्माकं द्वैतवादिनाम् ॥
तत्कटाक्षेणैव वयमुमेशादिमतानि हि ।
विरच्य लोकरक्षार्थमभवाम कृतास्पदाः ॥

मदर्थमाभातिगुरुः परात्मा,
स एव चाहं विदिते तु तत्त्वे ।

अज्ञानतस्त्वं गुरुरल्पबुद्धिः,
शिष्योऽहमेतत् खलु भेदजातम् ॥
अजा परेशस्य जगद्विमोहिनी,
विवेकिनामप्यपहर्त्ति संविदम् ।
तथा ह्यभेदो नहि भाति सिद्धव-
द्विधिप्रतीपोऽमुष्मतां भिदेच्छया ॥
अपारमार्थिको भेदोऽप्यघौघग्रस्तचेतसाम् ।
कल्पितानि मतान्यद्य तन्त्रागमरूपावशात् ॥
तदभावेऽन्धमार्गेण चरन्त्यत्र विसंविदः ।
गुरो भवत्कटाक्षेण मार्गगाः स्युः पुनः पुनः ॥
सर्वज्ञयुष्मद्गुणमङ्गमद्य-
शेषोऽपि नो वर्णयितुं समर्थः ।
किं युष्मदङ्घ्र्यब्जनिषेवणास्त-
ज्ञानास्तथा त्वत्कृपयात्तवेषाः ॥
गुरो गरीयसी कीर्त्तिस्तव लोके भवेत्सदा ।
षण्मताचार्य्यगुरुरित्यस्माभिः शिरसा धृता ॥
श्रीशङ्कराचार्य्यगुरुं परात्परं,
भजामहे सन्ततमिष्टसिद्धिदम् ।
इतीरयन्तः प्रणिपत्य सादरं,
तादात्म्यगाः स्युर्विगतद्विधाभयाः ॥
तदन्ये भानुमरीच्यादयः शिष्याः परमगुरुमाचार्यस्वामिनं सस्ने-
हमूचुः,

'जीवेशयोर्भिदा मिथ्या ह्यद्वैतं सत्यमुत्तमम् ।
तद्दर्शनगुरुर्लोकगुरुस्त्वन्ये तु गर्हिताः ॥
अतो लोकगुरुं त्वान्तु शुद्धाद्वैतं परात्परम् ।
नमामि सच्चिदानन्दं नित्यमव्ययमीश्वरम् ॥
अस्माकं यद्भिदाज्ञानमज्ञानेन प्रवर्द्धितम् ।
तन्नाशनं कुरु गुरो मोक्षदो भव सन्ततम् ॥

इत्युक्त्वा परमगुरुचरणारविन्दयुगलं नत्वा* ढक्कातालवीणादिकराः कान्तानिक्रमविनोदमेवं चक्रुः, सद्गुरोः शङ्कराचार्यस्वामिनः कटाक्षलेशेनैव वयं कृतार्था नित्यमुक्ता अभवाम इति निश्चित्य च ।

तं वन्दे गुरुमव्यक्तं जगत्कारणमद्वयमिति ।
नित्यं सत्यं ज्ञानमनन्तं शान्तमजं ध्रुवमचरूपम् ।
तद्विज्ञानादिह सुज्ञानं प्राप्तमभूदचिरादस्माभिः ॥
ये मूढा जीवे परभेदं जल्पन्तीह भवाब्धौ मग्नाः ।
नानायोनिषु मग्नाः पुनरपि मातुस्तनरसपानोन्मत्ताः ॥
बाल्यं पुनरपि कौमारं ते यौवनमुद्यत् स्थविरत्वञ्च ।
पुनरपि मृत्योर्वशतां यान्ति ब्रह्मज्ञानवहिर्मुखमूढाः ॥
दुःखप्राप्तिविधिस्था नित्यं भेदधियोऽङ्गीकृतसंसाराः ।
शुद्धाद्वयविज्ञानमरुच्यन्तेषां घृतमिव रोगयुतानाम् ॥
ये किल नष्टाखिलपाप्मानस्तेषामिति मतिरनिशं भाति ।
परमव्ययमद्वैतं ब्रह्मैवाहं न तु किञ्चिज्ज्ञो जीवः ॥

नहि मे देहेन्द्रियसंयोगो मिथ्याभूतजगत्प्रमुखः किम् ।
इह परलोकद्वयमपि नहि मे सत्त्वं पूर्णं सम्प्राप्तश्च ॥
स्थूलकलेवरमेतत् पञ्चीकृतभूतोत्थं लिङ्गान्तःस्थं ।
कृत्वा कारणदेहे तदपि च, प्राणमतीत्य स विन्दुस्थाने ॥
अङ्गुष्ठे परमात्मनि लीनं प्रविधायान्तः परिपूर्णमजम् ।
भूताश्रयमानन्दाकारः शुद्धाद्वैतफलानुभवाद्धि ॥
एवं वर्त्तितुरिह परभीतिर्नहि मे परमगुरोरुपदेशात् ॥

संसारस्यौषधं नित्यं यो न वेत्ति विमूढधीः ।
सगुणं निर्गुणं वापि कोऽन्यस्तस्मादचेतनः ॥
अथवा सर्व्वदेहेषु समवस्थितमीश्वरम् ।
न जानाति विमूढात्मा कोऽन्यस्तस्मादचेतनः ॥
ब्राह्मण्यं प्राप्य लोकेऽस्मिन् मूको वा बधिरोऽपि वा ।
नापक्रामति संसारादात्महन्ता भवेत् स तु ॥
ब्राह्मण्यं प्राप्य दुर्बुद्धिः संसारे हि भ्रमेत्तु यः ।
तत्रापि न विरक्तः स त्वधःपतनमृच्छति ॥
ब्राह्मण्यं प्राप्य लोकेऽस्मिन् भवेदज्ञानमोहितः ।
आत्मानं नहि जानाति आत्महन्ता भवेन्नरः ॥
ब्राह्मण्यं प्राप्य लोकेऽस्मिन् न पिवेद्ब्रह्मसद्रसम् ।
तृष्णाशान्तिस्तस्य नास्ति बहुमात्वसनाद्रसैः ॥
ब्राह्मण्यं प्राप्य लोकेऽस्मिन् न ध्यायेत्परमेश्वरम् ।
तस्य जन्म वृथा पश्चाच्चाण्डालो भवति ध्रुवम् ॥

कर्मज्ञानद्वयं लोके प्रमाणं वर्त्तते खलु।
कर्मणोऽप्यधिकं ज्ञानं तद्द्वयात्पतितश्च्युतः॥
ब्राह्मण्यं प्राप्य लोकेऽस्मिन् सद्गुरोरुपदेशतः।
न जानाति परं ब्रह्म तं विना पतितस्तु कः॥
ब्राह्मण्यं प्राप्य लोकेऽस्मिन् मूलाधारादिचक्रगम्।
ब्रह्ममार्गं न जानाति तं विना पतितस्तु कः॥
ब्राह्मण्यं प्राप्य लोकेऽस्मिन् पूर्णमण्डललक्षणम्।
न जानाति परं ब्रह्म तं विना पतितस्तु कः॥
ब्राह्मण्यं प्राप्य लोकेऽस्मिन् शुद्धाद्वैताश्रितो न चेत्।
स याति मातृकोटीनां गर्भशय्यां विनष्टधीः॥
ब्राह्मण्यं प्राप्य लोकेऽस्मिन् शङ्कराचार्यमुत्तमम्।
अद्वैतगुरुमीशानं न ध्यायेत् स तु पातकी॥
अद्वैतेन विना मोक्षो न जीवस्येति निश्चयः।
तस्मादद्वैतमीशानं गुरुं वन्दामहे वयम्॥

इत्यादि बहुधा गुरुं स्तुत्वा प्रीतितादात्म्यभावास्तूष्णीमासुः।

इत्यानन्दगिरिकृतौ श्रीगुरुस्तुतिर्नाम चिमप्रतिप्रकरणम्॥ ७२॥

## चतुःसप्ततिप्रकरणम्।

ततः परं सर्वज्ञः सकलगुरुराचार्यः स्वशिष्यान् परमतकालानलादीन् यतीन् तदन्यांश्च तत्र तत्र विषयेषु प्रेषयित्वा स्वयं स्वेच्छया स्वलोकं गन्तुमिच्छुः काञ्चीनगरे मुक्तिस्थले कदाचिदुपविश्य स्थूलशरीरं सूक्ष्मेऽन्तर्धाय सद्रूपो भूत्वा सूक्ष्मं कारणे विलीनं कृत्वा चिन्मात्रो भूत्वा अङ्गुष्ठपुरुषस्तदुपरि पूर्णमखण्डमण्डलाकारमानन्दमीश्वरसन्निधौ प्राप्य सर्वजगद्व्यापकं चैतन्यमभवत्। सर्वव्यापकचैतन्यरूपेणाद्यापि तिष्ठति। तत्रत्या ब्राह्मणाः सर्वे शिष्याः प्रशिष्याश्च उपनिषद्गीताब्रह्मसूत्राणि सम्यक् पठन्तः अत्यन्तशुचिस्थले गर्त्तं कृत्वा तत्र गन्धाक्षतबिल्वपत्रतुलसीप्रसूनादिभिः सम्पूज्य तच्छरीरं समाधिं चक्रुः। ततः प्रत्यहं क्षीरतर्पणक्षीरान्ननिवेदनादिभिः सर्वोपचारैर्विधिवदभ्यर्च्य ततो महापूजादिने बहुयतीनां ब्रह्मविदां ब्राह्मणानां कर्मज्ञाननिष्ठानाम् उत्तमानाञ्च श्रीमदद्वैतविद्याप्रकाशकश्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छङ्करगुरुस्वामिनमुद्दिश्य परब्रह्मणो धिया स्वादन्नमूलशाकसूपभक्ष्यघृतदध्यादिसमस्तव्यञ्जनयुक्तमन्नं वस्त्राभरणैः शाकमीश्वरपूजामेवं चक्रुः। पूजां सर्वेवं चक्रुः।

एवं हि शङ्कराचार्यगुरुर्मुक्तिप्रदः सताम् ।

आकल्पमेतत्परमार्थबोधं
श्रीशङ्कराचार्यगुरोः कथार्थम् ।
सच्छिष्यमुक्तिप्रदमस्तु लोके
संसेवितञ्चार्यजनैरभेदम् ॥

सर्वव्यापकचैतन्यरूपेणाद्यापि तिष्ठति ।
अनन्तानन्दगिरिणा गुरोर्विजयमुत्तमम् ॥
रचितं ये तु गृह्णन्ति ते मुक्ताः स्युर्न संशयः ।
अद्वैतार्थप्रदं लोकैरद्वैतार्थानुचिन्तकैः ॥
गुरुकीर्त्तिप्रदं शास्त्रमुपास्यं भवति ध्रुवम् ।

इह तु सकललोकैः सेव्यमानो गुरुर्मे
विदितसकलवेदः शङ्कराचार्यनामा ।
सततमिदखिलकर्माण्यन्तरायाणि हत्वा
दिशतु परमतत्त्वोद्धारमोक्षं स एव ॥
चतुःसप्तति*तमैः ७४ प्रकरणैः परिशोभितं
गुरुदिग्विजयं नाम शास्त्रं जयतु भूतले ॥

इत्यानन्दगिरिकृतौ सच्चिदानन्दैक्यं नाम चतुःसप्ततिप्रकरणम् ॥ ७४ ॥

॥ * ॥ समाप्तश्चायं ग्रन्थः ॥ * ॥

---

* चतुःसप्ततिसंख्यैः प्रकरणैः परिशोभितमिति क्वचित्पाठः ।

# विज्ञापनम् ।

शङ्करविजयग्रन्थः पूर्व्वमेतद्देशे दुष्प्राप्य आसीत्, किन्त्वयं ग्रन्थश्छात्राणां पण्डितानाञ्चानेकमतज्ञापनेन समीचीनां व्युत्पत्तिमादधाति, शङ्कराचार्य्याणां वादरायणसूत्रभाष्यकाराणां जीवनचरितमपि समीचीनतया ज्ञापयति। शङ्कराचार्य्यास्तु माधवाचार्य्यहर्षमिश्रवाचस्पतिमिश्रपक्षधरमिश्रोदयनाचार्य्यगङ्गेशोपाध्यायादीनामतीवमान्यास्तदपेक्षया प्राचीनाश्च, तच्छिष्योपशिष्यैर्बहूनि अद्वैतमतप्रकाशकप्रकरणानि भारतवर्षप्रचलितानि प्रणीतानि। गुरुपरम्परयास्माभिः श्रुतं शङ्कराचार्य्यसमयमपेक्ष्य द्वादशशतवत्सरा व्यतीता इति। शङ्करविजयस्य नागराक्षरलिखितं एकं पुस्तकं बहुयत्नेन प्राप्तं, तैलाङ्गाक्षरलिखितमपरमपि यत्नैरनेकैरानीतम्, तद्दृष्ट्वा वङ्गाक्षरेण एकं पुस्तकमपि लिखितं लेखकेन, एतत्पुस्तकत्रयं दृष्ट्वा व्युत्पत्तिवलेन चायं ग्रन्थः शोधित इति ॥

यत्प्रसादादेतादृशं दुर्लभमपि सुलभतमं भवति सासियाखण्डक्षेमकारिणी सभा क्रमशोऽधिकामधिकां दीप्तिं दधाना चिरजीविनी भूयादिति श्रीजयनारायणतर्कपञ्चाननः प्रार्थयते ॥

# विज्ञापनम् ।

पुरासीत् खड्दहग्रामे प्रसिद्धः सिद्धपूरुषः ।
नित्यानन्दप्रभुर्नाम्ना शिष्यसङ्घैकतारकः ॥ १ ॥
तदन्वयभवः श्रीमान् नवद्वीपेति नामकः ।
विद्यारत्नोपनामा च गोस्वामीतीर्य्यते जनैः ॥ २ ॥
नानाशास्त्राटवीयानपञ्चाननसमः सुधीः ।
शङ्कराचार्य्यविजयग्रन्थस्य शोधनाय सः ॥ ३ ॥
प्राप्तवान् आसियासंशत्-सभ्यानुमतिमर्थितां ।
शोधितस्तेन रामाग्निमितप्रकरणावधिः ॥ ४ ॥
मुद्रितोऽभूत्ततः सोऽपि निजकार्य्येषु तत्परः ।
अत्यन्तानवकाशत्वादशक्तः शोधने स्वयं ॥ ५ ॥
जयनारायणं नाम्ना तर्कपञ्चाननाभिधं ।
स्वीयन्यायगुरुं धीरं समागम्येदमब्रवीत् ॥ ६ ॥
ममावकाशलेशोऽपि नास्तीदानीमतः कथं ।
इमं ग्रन्थं शोधयामि भवताऽतः प्रगृह्यतां ॥ ७ ॥
कृपया मम भारोऽयं ग्रन्थसंशोधनात्मकः ।
अध्यापकोऽसौ कृपया तत्तदामवहद्गुरुं ॥ ८ ॥

कालीपीठादवाच्यान्दिशि विमलकुलब्राह्मणावासभूमि-
र्वड्ग्रामसंज्ञोऽस्ति पल्लीव्रजवितततनुर्ग्राम उद्यद्विदग्ध्रः ।

तत्रासीद् विद्वदिन्द्रः सुमतिजनगणाध्यापनासक्तचित्तः
सावर्णः स्थापितोऽतिप्रथितकुलचतुःसागरोवारिपूर्णः ॥ ९ ॥

श्यामसुन्दरसञ्ज्ञोऽसौ वाचस्पतिपदास्पदं ।
प्रतीच्यवैदिकश्रेणीलसत्कात्यायनान्वयः ॥ १० ॥
सावर्णेभ्यः समासाद्य बहुलां भूमिमुत्तमां ।
जीविकां बहुलानन्तेवासिनोऽध्यापयच्चिरं ॥ ११ ॥
भ्रातृव्यस्तस्य धीरेन्द्रो रामचन्द्रेति नामधृक् ।
तर्कालङ्कारोपनामा तत्र तर्कमपाठयत् ॥ १२ ॥
तस्याङ्गजो हरिश्चन्द्रविद्यासागरसञ्ज्ञकः ।
पुराणे धर्म्मशास्त्रे च निपुणोऽभून्महामतिः ॥ १३ ॥
तस्य द्वितीयस्तनयो जयनारायणाभिधः ।
तर्कपञ्चाननोपाख्याविख्यातस्तर्कसंश्रयात् ॥ १४ ॥
काव्यं व्याकरणं धर्म्मशास्त्रञ्च स्मार्त्तनिर्म्मितं ।
योऽधीतवान् यत्नशाली कथितात् पितुरात्मनः ॥ १५ ॥
येनाऽलङ्कारशास्त्राणि प्राप्तानि रामतोषणात् ।
विद्यालङ्कारविख्यातादागमग्रन्थकारकात् ॥ १६ ॥
कलिकातानगरादारात् शालिकायाम उत्तमः ।
गङ्गापश्चिमकूलस्थस्तनामोद्गीतमोपमः ॥ १७ ॥
तर्कसिद्धान्तोपनामा जगन्मोहननामधृक् ।
तस्मादतिसुविख्यातादधीतं येन यत्नतः ॥ १८ ॥
तर्कशास्त्रं तत्त्वचिन्तामणिप्रभृतिविस्तृतं ।

दीधितिप्रमुखश्चापि गादाधर्य्यादिकन्तथा ॥१९॥
येन गुर्ज्जरदेशीयान्माथूरामाख्यशास्त्रिणः ।
वेदान्तादीन्यधीतानि वाग्देव्याः पौरुषाकृतेः ॥२०॥
यो नारिकेलडाङ्गाख्यग्रामे लोहाध्वसन्निधौ ।
निवसन् सुधियः शिष्यानध्यापयति साम्प्रतं ॥२१॥
श्रीयुक्तेश्वरचन्द्राख्यो विद्यासागरसञ्ज्ञितः ।
यस्मान्न्यायादिशास्त्राणि विख्यातोऽधीतवान् पुरा ॥२२॥
महेशचन्द्रः श्रीयुक्तो न्यायरत्नोपनामकः ।
यस्मात्तर्कादिका विद्या विख्यातः प्राप्तवान् पुरा ॥२३॥
कल्क्यातानगरान्तःस्थे स्वीयसंस्कृतमन्दिरे ।
दर्शनाध्यापने राज्ञा यः परीक्ष्य नियोजितः ॥२४॥
यस्य ज्येष्ठः शालिकास्थे मठे श्रीमधुसूदनः ।
पाठयत्यधुना तर्कं तर्कवागीशविश्रुतः ॥ २५ ॥
जयनारायणः श्रीमान् सोऽयं न्यायादिवित्तमः ।
चतुस्त्रिंशात् प्रकरणादारभ्यैनमशोधयत् ॥ २६ ॥

शकस्य धरणीपतेर्भुजगनागशैलेन्दुमेऽ-
ह्निताल्ियुतहायने शनिदिनेऽत्र मासे मधौ ।
विशुद्धपदवीं गता गदिततर्कपञ्चाननात्
सदादृतसुमुद्रणाकृतिरियाय सम्पूर्णताम् ॥ २७ ॥

---

# शङ्करविजयस्य निर्घण्टपत्रम् ।

# शङ्करविजयस्य शुद्धिपत्रम्।

| पृष्ठाङ्काः। | पङ्क्त्यङ्काः। | अशुद्धानि। | शुद्धानि। |
|---|---|---|---|
| ९ | २ | सवात्मको | सर्वात्मको |
| १२ | १० | मनुष्ठेयमिति | मनुष्ठेय इति |
| १८ | ४ | कुटीचका | कुटीचरा |
| १८ | ८ | कुटीचका | कुटीचरा |
| १८ | ६ | स्तदाश्रमा | स्तदा तदाश्रमा |
| १८ | १४ | कुटीचकः | कुटीचरः |
| १९ | ९ | वुद्धिवृद्धि | बुद्धिवृद्धि |
| २४ | ४ | वासः वास | वासुः वासु |
| २८ | ८ | वुद्धिगुहा | बुद्धिगुहा |
| ३१ | ७ | कम्मणाव | कर्म्मणैव |
| ३२ | १० | भवत | भवता |
| ३२ | १२ | धारयिताव्य | धारयितव्य |
| ३२ | २१ | व्यंशद्वयं | व्यंसद्वयं |
| ३२ | २१ | वाहू | बाहू |
| ३३ | १७ | किञ्चिद्च | किञ्चिज्च |
| ३४ | १३ | निरस्तान्तरज्ञान | निरस्तान्तराज्ञान |
| ३७ | १० | वैष्णवादधिक | वैष्णवादधिकं |
| ४२ | १० | पाशुपाता | पाशुपता |
| ४५ | २१ | मोक्ष | मोक्षं |
| ५१ | ८ | सर्वदेवकारणः | सर्वदेवकारणं |
| ५१ | १२ | कैण्डिन्यमुनेः | कौण्डिन्यमुनेः |

| पृष्ठाङ्काः। | पङ्क्त्यङ्काः। | अशुद्धानि। | शुद्धानि। |
|---|---|---|---|
| ५२ | २ | किमप्रामाण्य | किम् प्रामाण्य |
| ५४ | १० | चौलोपनयन | चौडोपनयन |
| ५६ | १५ | चन्द्रसूर्यो | चन्द्रसूर्यौ |
| ५८ | ३ | वोध | बोध |
| ५९ | १ | मतयोः पुनरन्धो | मतयोर्निराकृतयोः पुनरन्धो |
| ६० | ५ | तपस्तमतनुरेव | तपस्तमतनोरेव |
| ६१ | ४ | तदन्ततः | तदन्यत् |
| ६१ | ६ | तस्याप्यपज | तस्याप्यग्रज |
| ६१ | ११ | ब्रह्मविद | ब्रह्मविद् |
| ६४ | १४ | सम्बन्धो | सम्बद्धो |
| ६७ | ८ | तस्माद् | तस्मात् |
| ६८ | १६ | नविना विद्यते | न विद्यते |
| ६८ | १७ | मनो नैर्मल्य | मनो नैर्मल्यं |
| ७० | १ | पाश्वराचिषु | पाश्वराचेषु |
| ७० | ६ | यच्छितादूरो | यच्छितादूरो |
| ७२ | २ | पालनत्येनैव | पालकत्वेनैव |
| ७२ | १८ | यद्यप्युच्यते | यद्युच्यते |
| ७२ | २२ | परदारां | परदारान् |
| ७४ | ११ | वक्तव्यः | वक्तव्यम् |
| ८० | ११ | वतस्थः केव | वनस्थः एतैः केन |
| ८४ | ४ | तन्मस्तोपासनेन | तन्मन्त्रोपासनेन |
| ८७ | १३ | प्रयोजन | प्रयोजनं |
| ९२ | २ | चतुस्पदां | चतुष्पदां |

| पृष्ठाङ्काः। | पङ्क्त्यङ्काः। | अशुद्धानि। | शुद्धानि। |
|---|---|---|---|
| ९४ | २ | गुरुनमस्कृत्वा | गुरुं नमस्कृत्वा |
| ९७ | २ | भूमि | भूमिं |
| ९७ | ५ | अतिष्ठत | अतिष्ठत् |
| १०२ | २ | जयेक्षया | जयेच्छया |
| १०२ | ३ | केचिक्कृच्छ्र | केचिच्छृच्छ्र |
| १०२ | ६ | पिक्कवाते | पिच्छवाते |
| १०२ | ८ | तक्कियता | तच्छियता |
| १०३ | १६ | नस्मभव | देह्यस्मभवं |
| १०३ | १७ | गुणयुतोऽभव | गुणयुतोभव |
| १०४ | ५ | सदुपासवतां | सदुपासनावतां |
| १०४ | ६ | वेदामंज्ञा | वेदाः |
| १०४ | ६ | वदन्ति | विन्दन्ति |
| १०४ | ९ | मां निगमैर्माध्वैर्वेद्यं | मां ये निगमावेद्यं |
| १०४ | १६ | पतादृग्वपुषः | एतादृग्वपुष |
| १०६ | २ | तत्पट्टन | तत्पत्तन |
| १०६ | ९ | तात्पर्ये | तात्पर्यै |
| १०७ | १ | तन्मज्ञ | तन्मूल |
| १०७ | ६ | प्रिष्टो | स्निष्टो |
| १०९ | ६ | षडदल | षड्दल |
| १११ | १ | एव | एवं |
| १११ | ९ | चिरकालारभ्य | चिरकालादारभ्य |
| ११२ | २० | प्रसङ्गात | प्रसङ्गात् |
| ११६ | ११ | त्यागनेके | त्यागेनैके |
| ११७ | ३ | देतद्ग्राह्य | देतदग्राह्य |

| पृष्ठाङ्काः। | पङ्क्त्यङ्काः। | अशुद्धानि। | शुद्धानि। |
|---|---|---|---|
| ११७ | १० | सत्वामात्र | सत्तामात्र |
| ११७ | १२ | तसुप | तम्प |
| ११७ | १४ | बुद्धिरित्वा | बुद्धिरीत्या |
| ११७ | १४ | तदत्यन्तदोष्टं | तदत्यन्तदुष्टं |
| ११८ | १ | तवनीत | नवनीत |
| ११८ | ६ | तद्व्यतिरेकेन | तद्व्यतिरेकेण |
| ११८ | १५ | तत्तद्रुण | तत्तत्तद्गुण |
| १२० | ५ | विद्यता | विघ्नता |
| १२१ | १० | गरुं | गुरुं |
| १२२ | २ | माङ्गार्चिताङ्घ्रि | माङ्गार्चिताङ्घ्रि |
| १२३ | १५ | सद्याविद्यया | सद्य अविद्यया |
| १२७ | ७ | वाच्यस्य | वाच्यत्वं |
| १२८ | १३ | सर्वकारणः | सर्वकारणं |
| १२९ | ७ | परमगुरु | परमगुरुं |
| १२९ | ११ | विंशम | विंशम् |
| १३१ | २ | सर्वे | सर्वे |
| १३१ | ४ | दभि | दिभि |
| १३१ | ५ | नवेदुः | न विदुः |
| १३१ | ६ | शब्दवाच्य | शब्दवाच्यं |
| १३१ | ८ | साक्षात्कर्त्तवेति | साक्षात्कर्त्तव्येति |
| १३१ | ८ | वाग्रपा | वाग्रूपा |
| १३५ | ११ | परभावात् | पराभावात् |
| १३५ | १२ | तद्ज्ञानकारणं | तद्भानकारणं |
| १३६ | ७ | किञ्चिद्विचारणीयं | न किञ्चिद्विचारणीयं |

| पृष्ठाङ्काः। | पङ्क्त्यङ्काः। | अशुद्धानि। | शुद्धानि। |
|---|---|---|---|
| १३७ | १० | स्यात् भंगु | स्यात् विद्याभंगु |
| १३७ | १६ | निवर्हेया | निवर्हेयां |
| १३९ | २ | प्रत्यामन्न | प्रत्यासन्न |
| १४० | १३ | मैरव | भैरव |
| १४० | २० | भच्यियिष्यती | भच्यियिष्यती |
| १४१ | २० | भवतक्षतं | भवत्क्षतं |
| १४१ | २१ | ब्राह्मण्याचरतां | ब्राह्मण्याचारतां |
| १४३ | ५ | जटाजुटो | जटाजूटो |
| १४३ | ६ | शम्भू भैरव | शम्भुभैरव |
| १४६ | ३ | किमच्च | किमच्चा |
| १४६ | ३ | तीतः सून्यात्म | तीतसून्यात्म |
| १४६ | ११ | पुनरागमने | पुनरागमनं |
| १४८ | १० | जलुकावत् | जलौकावत् |
| १४८ | ११ | द्व्याजलुका | द्व्याजलौका |
| १४८ | १४ | म्तोपधि | म्तोपाधि |
| १५० | ८ | केचिन्मर्खजना | केचिन्मूर्खजना |
| १५० | १३ | भोच्चसाधनं | मोच्चसाधनं |
| १५१ | १२ | धर्म्मैवाव | धर्म्मैवाव |
| १५६ | २ | सर्व | सर्वं |
| १५७ | २ | वौद्ध | बौद्ध |
| १५७ | २ | शवलनामा | शवरनामा |
| १५७ | २ | स्वामिन | स्वामिन् |
| १५७ | ३ | सर्वोत्तम | सर्वोत्तम |
| १५७ | ७ | किल कश्चिच्छवरनामालोके | किल लोके |

| पृष्ठाङ्काः। | पङ्क्त्यङ्काः। | अशुद्धानि। | शुद्धानि। |
|---|---|---|---|
| १६० | २ | सत्यट्टनं | सत्यत्तनं |
| १६० | १० | त्रिकालनायक्ल | त्रिकालनायक्त |
| १६१ | ७ | म्ढतम | मूढतम |
| १६१ | १६ | खवाहनारूढस्य | स्ववाहनारूढस्य |
| १६२ | ३ | खन्तर्गत | स्वान्तर्गत |
| १६२ | ४ | श्यामशवलादयो | श्यावशवलादयो |
| १६४ | ४ | बहुप्रपद्यैः | बहुप्रपन्नैः |
| १६४ | ५ | वियुलतराय | विपुलतरायां |
| १६४ | ७ | मात्रेणलक्ष्य | मात्रलक्ष्यां |
| १६४ | ८ | परमात्मानमीक्ष्य | परमात्मानं समीक्ष्य |
| १६५ | २ | वकुण्ठ | वैकुण्ठे |
| १६५ | ८ | प्रसादलवं | प्रसादलवो |
| १६५ | ८ | मित्यनुज्ञा | इत्यनुज्ञा |
| १६७ | ३ | पुस्पधनु | पुष्पधनु |
| १६७ | ९ | ज्ञात्वा मोक्षप्रदोऽपि | ज्ञात्वा स्थिताय मोक्षप्रदोऽपि |
| १६७ | १२ | शीकृत | वशीकृत |
| १६८ | ३ | पुस्पधनु | पुष्पधनु |
| १६८ | १५ | वशासम्भवात् | वशीकरणासम्भवात |
| १६८ | १६ | यदुच्येत | यद्युच्येत |
| १७० | ९ | दरद्रादि | दरिद्रादि |
| १७० | ११ | मूलकत्वं | मूलत्वं |
| १७१ | ४ | नामर्याञ्चि | नामकयञ्चि |
| १७१ | ८ | सङ्घः कृत | सङ्घकृत |

| पृष्ठाङ्काः। | पङ्क्त्यङ्काः। | अशुद्धानि। | शुद्धानि। |
|---|---|---|---|
| १७१ | ११ | चिदर्थं दत्तं | चिदर्थोदत्त |
| १७१ | २१ | विहिता | विदिता |
| १७२ | ५ | केचिद्भूषणानि | केचिद्दूषणानि |
| १७२ | ५ | दयाऽप्युप | दयोऽप्युप |
| १७२ | ९ | वक्तव्य | वक्तव्यम् |
| १७४ | ६ | परिसेव्यमान | परिसेव्यमानं |
| १७५ | १ | बङ्गनि | बहूनि |
| १७५ | १८ | पर्व्वपक्षे | पूर्व्वपक्षे |
| १७६ | २ | प्रतिपादितं। यद्ब्रह्म | प्रतिपादितं यद्ब्रह्म |
| १७६ | ५ | इष्यत | इच्छत |
| १७६ | ६ | इष्यत | इच्छत |
| १७६ | १३ | याग्यता | योग्यता |
| १७६ | १८ | एकस्येन्दानुपातः | एकस्येन्द्रानुपातः |
| १८८ | १० | ब्रह्मेतिप्राप्तिः | ब्रह्मेतिप्राप्तेः |
| १९२ | ९ | भगवद्भिरार्य्यैं | भवद्भिराचार्य्यैं |
| २१५ | १२ | किमुच्चरितं | किमूच्चरितं |
| २१५ | १९ | जाम्बूनदी | जम्बुनदी |
| २१६ | १ | लङ्कापट्टणं | लङ्कापत्तनं |
| २१६ | २ | कोटिपट्टणं | कोटिपत्तनं |
| २१६ | ३ | पट्टण | पत्तन |
| २१६ | ८ | पट्टणोपर्य्यव | पत्तनोपर्य्यव |
| २१७ | १७ | वृत्तेर्लब्ध्यो | वृत्तेर्लब्धो |
| २२४ | ११ | अपमृत्यकालमृत्यु | अपमृत्युकालमृत्यु |
| २२७ | ६ | भवद्भिरेव | भगवद्भिरेव |

| पृष्ठाङ्काः। | पङ्क्त्यङ्काः। | अशुद्धानि। | शुद्धानि। |
|---|---|---|---|
| २२८ | २ | शरीबन्धः | शरीरबद्धः |
| २३३ | ११ | प्रभं | प्रभुं |
| २३५ | ८ | मल्लिकार्जन | मल्लिकार्ज्जुन |
| २३७ | ६ | पट्टणं | पत्तनं |
| २५१ | ८ | पट्टणं | पत्तनं |
| २५१ | ११ | पट्टणं | पत्तनं |
| २५८ | ४ | ज्ञानानन्तलक्षणं | ज्ञानानन्तानन्दलक्षणं |
| २६४ | १० | यत् | यत्र |
| २६४ | ११ | समासतो भावि | समासतो वदभावि |
| २६८ | ११ | मार्गेण अवलम्ब्य | मार्गमवलम्ब्य |
| २७४ | १ | ब्राह्मणोपासनं | ब्राह्मणोपासनार्थं |

शुद्धिपत्रं समाप्तम् ॥